# त्रिपुरासारसमुच्चयः ।

[ तन्त्रशास्त्रम् ]

श्रीनागभट्टविरचितः ।

श्रीगोविन्दाचार्य्यकृतव्याख्यया समलङ्कृतः ।

पण्डितकुलपतिना,

वि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।

द्वितीयसंस्करणम् ।




कलिकातानगरे

कलिकाता यन्त्रे

मुद्रितः ।

ई १८९७ ।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर बि, ए,

PANDIT KULAPATI

JIBANANDA VIDYASAGARA, B. A.

*Superintendent, Free Sanskrit College, Calcutta.*

# त्रिपुरासारसमुच्चयः ।



## प्रथमः पटलः ।

प्रह्वप्राचीनबर्हिःप्रमुखसुरवरानीककोटीरकोटि-
श्लिष्टस्पष्टेन्द्रनीलामलमणिमधुपश्रेणिजुष्टं क्रुषीष्ट ।
श्रीपादाम्भोजयुग्मं नखमुखविलसद्रश्मिकिञ्जल्कपुञ्जम्
शिञ्जन्मञ्जीरहंसीमुखरितमनिशं मङ्गलं वो भवान्याः ॥१॥

---

नत्वा शङ्करचरणं श्रीमद्गोविन्दशर्मणा ।
त्रिपुरासारटीकेयं रच्यते सरहस्यना ॥

तस्यै दिशे सततमञ्जलिरेष पौष्पः प्रक्षिप्यते मुखरितो मधुरैर्द्विरेफैः ।
जागर्त्ति यत्र भगवान् गुरुचक्रवर्त्ती विश्वोदयप्रणयनाटकसूत्रधारः ॥

श्रीमद्गुरुपरमेश्वरपदारविन्दप्रणिहितभक्तिभरावनम्रशिरसा परमाचार्य्यपरम्पर-प्रसादलब्धविज्ञानेन सर्वागमपारावारपारगतेन विज्ञानदैशिकेनाचार्य्यनागभट्टेन विरचितस्य त्रिपुरासारसमुच्चयस्य सम्प्रदायदीपिका व्याख्या आरभ्यते। तत्र सदाचारानुमितश्रुतिबोधनं परदेवतास्मरणपूर्वकमाशीर्लक्षणं शिष्यशिक्षार्थं निबध्नन्नाह प्रह्वप्राचीनबर्हिरित्यादि। भवान्याः श्रीपादाम्भोजयुग्मं वो युष्माकं मङ्गलं क्रुषीष्ट करोतु। कीदृशं प्रह्वप्राचीनबर्हिःप्रमुखसुरवरानीककोटीरकोटिश्लिष्टस्पष्टेन्द्रनीलामलमणिमधुपश्रेणीजुष्टं प्राचीनबर्हिः प्राच्यधिपस्तत्प्रमुखास्तत्प्रधाना ये प्रह्वा नम्रीभूता ये देवश्रेष्ठास्तेषां यः समूहः तस्य मुकुटसम्बन्धी व्यक्तीभूतो यः इन्द्रनीलामलमणिः स एव भ्रमरः तस्य पंक्त्या श्रेण्या युक्तम्। अम्भोजद्योतनमाह नखमुखेत्यादि। नखानां मुखे विलसत् यद्रश्मि तदेव किञ्जल्कसमूहो यस्य तादृशम्। पुनः कीदृशं शिञ्जन्मञ्जीरहंसीमुखरितं शब्दायमानम् ॥ १ ॥

भक्त्या गुरोर्भवपयोनिधिसेतुहेतून्
श्रीपादपद्मयुगरेणुकणान् प्रणम्य ।
लम्बोदरञ्च कथयामि गुरूपदिष्ट-
माराधनक्रममहं कुलनायिकायाः ॥ २ ॥

स्नात्वा यथाविधि विधौतकराननाङ्घ्रिः
आचम्य सम्यगमलाम्बरयज्ञसूत्रः ।
प्रागाननो धनददिग्वदनोऽथ वापि
बद्धासनो गणपतिञ्च गुरुञ्च नत्वा ॥ ३ ॥

संयोज्य जीवमथ दुर्गममध्यनाडी-
मार्गेण पुष्करनिविष्टशिवे सुसूक्ष्मे ।
हंसेन देहममरेन्द्रपुरोगतेन
सार्द्रेन्दुना भसितसाद् विदधीत मन्त्री ॥ ४ ॥

---

इष्टदेवतां नमस्कृत्य गुरुनमस्कारमाह भक्त्या इति। गुरोः पादपद्मरेणुकणान् प्रणम्य लम्बोदरञ्च प्रणम्य कुलनायिकाया आराधनविधिं कथयामि। कीदृशान् तान् संसार एव पयोनिधिर्दुस्तरत्वात् तदुत्तरणे सेतुहेतून् लीलातरणहेतून्। आराधनक्रमं कीदृशं गुरुणोपदिष्टं विना आगमज्ञानानर्थक्यप्रसङ्गात्। तस्माद्गुरुदेवतयोरैक्यं कर्त्तव्यम्। तदुक्तं यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति ॥ २ ॥

गुरुदेवतादि नमस्कृत्य उपासनाप्रकारमाह स्नात्वेति। नद्यादौ यथाविधि स्नात्वा सन्ध्यावन्दनादिकं कृत्वा यथाविधि आचम्य प्रकृष्टनिर्मलयज्ञसूत्रः सन् पूर्वाभिमुखः यथायोग्यं पद्मासने स्वस्तिकासने वा उपविश्य वामे गुरुं दक्षिणे गणेशं मध्ये इष्टदेवतां नत्वा वक्ष्यमाणभूतशुद्धिं विदधीत। दुर्गममध्यनाडीमार्गेण सुषुम्नान्तर्वर्त्तिना चित्रामार्गेण पुष्करनिविष्टशिवे सहस्रदलकमलकूटस्थपरमात्मनि जीवं जीवात्मानं संयोज्य अत्र ग्रन्थान्तरस्वरसवशाच्चतुर्विंशतितत्त्वान्यपि तत्र नयेत्। हंसेन हंस इति मन्त्रेण अमरेन्द्रपुरोगतेन

सास्यादिनाथ मरुताऽपनयन्नशेषम्
तद्भस्मराशिमखिलं भुवनं सकेन।
संप्लावयन् बलभिदा परिचिन्तयेत् स्व-
मात्मानमम्भसि घटेन सविन्दुकेन॥ ५॥
ततो बृहद्बुद्बुदमध्यवर्त्तिस्फुरत्प्रभामण्डलमण्डभाजम्।
ध्यात्वा तदन्तर्भुवनान्यमूनि विचिन्तयेद्भूतलमेतदन्तः॥६॥
स्मितप्रसवशोभितं नवमनिन्द्यगन्धोत्कटम्
कदम्बवनमुच्चकैरिह समन्ततश्चिन्तयेत्।
तदन्तरपि मण्डितं मणिगणैर्महामण्डपम्
हिरण्मयमुपाश्रितं द्युमणिमण्डलाभप्रभम्॥७॥
चतुर्द्वारोपेतं मणिमयचतुस्तोरणयुतम्
स्फुरत्ताराना‌थद्युतिसिततिताना‌ङ्कमुपरि।

---

सार्द्धेन्दुना अमरेन्द्री लकारः तत्पुरोगतोरेफः अर्द्धेन्दुर्विन्दुस्तेन रमिति मन्त्रेण स्वक स्वशरीरं भस्मितसात् भस्मसात् कुर्य्यात् भस्मीभूतं स्वशरीरमिति चिन्तयेदित्यर्थः॥ ३॥ ४॥

सास्यादिनाथ मरुतेति। सास्यं विसर्जनीयस्तस्यादिर्विन्दुः मरुत् यकारः तेन यमिति वायुवीजेन भस्मराशिं निराकुर्वन् सानुस्वारेण वलभिद्वीजेन लकारेण सकलं भुवनं प्लावितं कुर्वन् स्वमात्मानं अमृतमयाम्भसि सानुस्वारेण घटेन चिन्तयेत्। घटशब्देनाधिष्ठानलक्षणया जलं लक्षितम्। तेन च तद्वीजेन वकारेण सानुस्वारेणामृतमयाम्भसि आत्मानं ध्यायेदित्यर्थः॥ ५॥

तत इति। तदनन्तरं तज्जलवेगमध्यवर्त्ति स्फुरद्दीप्तिसमूहं ब्रह्माण्डं ध्यायेत्। तदभ्यन्तरे चतुर्दश भुवनानि तेषामभ्यन्तरे भूमितलं विचिन्त्य तन्मध्ये कदम्बवनं चिन्तयेत्। कीदृशं कदम्बवनं प्रकाशकुसुमशोभितं नवं नूतनम् अनिन्द्यगन्धोत्कटं मृद्वर्धीयसौरभशालि सर्वतो महत्कदम्बवनं तद्वनाभ्यन्तरे मणिभिर्भूषितं सौवर्णमहामण्डपं सूर्य्यमण्डलाभदीप्तं चिन्तयेत्॥ ६॥ ७॥

कीदृशं चतुर्द्वारैर्युक्तं मणिमयैश्चतुर्भिस्तोरणैः सहितम्। स्फुरन्ती या शशि-

स्थितौ द्वारे द्वारे रुचिरमणिमाल्याम्बरधरौ
गणेशक्षेत्रेशौ च सपरिकरौ यस्य महितौ ॥ ८ ॥

पूर्वद्वारि सवाहनं हरिहयं तस्यैव याम्ये यमम्
पाश्चात्ये वरुणं तथैव तदुदग्द्वारे कुबेरं स्थितम् ।
सङ्गीतादिरतैस्तदन्तरमरस्त्रीणां गणैराकुलम्
ध्यायेत् सम्यगनाकुलेन मनसा गन्धर्वमुख्यैरपि ॥९॥

तस्य मध्यगतसिंहविष्टरे पद्ममष्टदलशोभितं ततः ।
उद्यदुष्णकरमण्डलोज्ज्वलं चिन्तयेदरुणचारुकेशरम् ॥१०॥

तत्कर्णिकोपरि कपञ्चममम्बु तुर्य-
युक्तं मनुस्वरतदन्तयुतं विधाय ।
प्रेतं धिया तदुपरि त्रिदशेन्द्रवन्द्याम्
ध्यायेत्त्रिलोकजननीं दयितां पुरारेः ॥ ११ ॥

---

दीप्तिमद्वत् सितेन वितानेनोपरि चित्रं यस्य मण्डपस्य तम् । प्रतिद्वारं सपरिवारौ गणेशक्षेत्रपालौ स्थिताविति चिन्तयेत् ॥ ८ ॥

पूर्वेति । तस्य मण्डपस्य पूर्वद्वारि ऐरावतसहितमिन्द्रं ध्यायेत् । दक्षिणद्वारि महिषसहितं यमम् । पश्चिमद्वारि मकरसहितं वरुणम् । उत्तरद्वारि नरयानं कुबेरं ध्यायेत् । सवाहनानुकर्षि सकलान्वयि यदभ्यन्तरं नृत्यादिरतैः अमरस्त्रीसमूहैः व्याप्तं चिन्तयेत् । गन्धर्वकुलैरप्याकुलं चिन्तयेत् ॥ ९ ॥

तस्येति । तस्य मण्डपस्य मध्यस्थितसिंहासने अष्टदलपद्मं चिन्तयेत् । कीदृशं पद्मं प्रातःकालीनसूर्य्यविम्बतुल्यम् अरुणमित्यर्थः तथा अरुणं लोहितं मनोहारि च किञ्जल्कं यस्य ॥ १० ॥

तदिति । तस्याष्टदलकर्णिकाया उपरि हसौं इत्यासनवीजं विधाय तदुद्धारप्रकारमाह कं जलं तद्बीजं वकारः तत्पञ्चमो हकारः अम्बु रकारः वत्तुर्यः सकारः तेन युक्तं मनवश्चतुर्दश तदुपलक्षितसंख्यकस्वर औकारः तदन्तः अनुस्वारः ताभ्यां युक्तम् एतावता हसौं इति भवति । एतदेवासनवीजं देव्याः तदुपरि प्रेतं शिवरूपं विचिन्त्य तस्योपरि त्रिलोकमातरं हरवल्लभां ध्यायेत् ॥ ११ ॥

सुरुचिरनासिकां सुनयनां सुकपोलतला-
मरुणजटाकलापकलितामलचन्द्रकलाम् ।
विलसदष्टमीन्दुकमनीयललाटतटाम्
परिणतशारदेन्दुरुचिराननपङ्कजहाम् ॥ १२ ॥

बन्धूकारुणकान्तिदन्तवसनामुत्तुङ्गवृत्तस्तनीम्
युक्तां बालमृणालनालललितैर्भव्यैश्चतुर्भिर्भुजैः ।
तत्कालस्मितपद्मपत्रविलसन्नेत्रत्रयोद्भासिताम्
ताराधीशदिनेशकुण्डलधरामुन्नासिचिल्लीलतीम् ॥ १३ ॥

वलित्रयोद्भासितक्षीनमध्यां प्रदक्षिणावर्त्तगभीरनाभीम् ।
कस्तूरिकाकर्दमलेखयेव विराजमानामपि रोमराज्या ॥१४॥

स्मितनवबन्धुजीवकुसुमारुणसद्वसनाम्
मणिमयरसनाकलापकलितोरुनितम्बतटाम् ।
करिकरपीवरोरुयुगलां वरहंसगतिम्
चरणतलप्रभाविजितपङ्कजगर्भदलाम् ॥ १५ ॥

---

ध्येयदेवीस्वरूपमाह सुरुचिरेत्यादि। अरुणजटासमूहनिबद्धचन्द्रपीड़शभागां तथा प्रदक्षिणावर्त्तगभीरनाभी प्रदक्षिण आवर्त्तः भूमिर्यस्याः तादृश्या नाभ्या युक्तं कस्तूरिकाकर्दमरेखातुल्यया रोमराज्या युक्तां स्मितनववन्धूककुसुमारुणसद्वसनां विकसितबन्धूककुसुमारुणवस्त्रा मणिमयरसनाकलापकलितोरुनितम्बतटां मणिमयक्षुद्रघण्टिकासम्बन्धकटिदेशां करिकरपीवरोरुहस्तयुगलां हस्तिस्थूलहस्तजघनां चरणतलप्रभाविजितपङ्कजगर्भदलां गर्भोऽभ्यन्तरं प्रणतपुरन्दरप्रमुखलेखनिकायलसन्मणिमुकुटप्रभापटलपाटलिताङ्घ्रियुगां नम्रीभूतेन्द्रोपक्रमदेवसमूहदीप्यन्मणिमुकुटदीप्तिसमूहश्वेतरक्तपदद्वयां मणीनां नानाविधत्वाद्दीप्तेः पाटलत्वम्। सुरुचिरेति। अतिमनोहारिसन्ध्याकालीनाम्बुददीप्तिसमूहजुषा सेवितेन निजतनुतेजसा स्वशरीरतेजसा कवलितं व्याप्तं दिग्वलयञ्च यया ताम्। दिव्याम्बुवाहेति दिव्यमेघसमूहोदरनिर्गतैर्मुक्ताफलैर्विरचितां रुचिरां मनोहारिणीं एकावलीम्। कौ मस्तकस्तस्यान्ते गले वहन्तीं अथवा कान्ते कमनीये गले। पाशाङ्कुशे ऊर्द्ध्ववामदक्षहस्ताभ्यां वराभये अधःकराभ्यां दधानाम्। रत्नप्रकाण्डरचिताभरणाभिरामां रत्नप्रकाण्डं रत्नश्रेष्ठस्तेन

प्रणतपुरन्दरप्रमुखलेखनिकायलसन्-
मणिमुकुटप्रभापटलपाटलिताङ्घ्रियुगाम् ।
सुरुचिरसान्ध्यवारिधरकान्तिकलापजुषा
निजतनुतेजसा कवलिताम्बरदिग्वलयाम् ॥ १६ ॥

दिव्याम्बुवाहनिवहोदरमुक्तवृत्त-
मुक्ताफलैर्विरचितां रुचिरां वहन्तीम् ।
एकावलीममलकोमलकान्तियुक्ताम्
कान्ते गले च हरिचन्दनलिप्तगात्राम् ॥ १७ ॥

पाशाङ्कुशाभयवरोद्यतपाणिपद्माम्
रत्नप्रकाण्डरचिताभरणाभिरामाम् ।
स्मेराननां रुचिरदन्तमरीचिवीचि-
धौतारुणाधरदलां सुरवृन्दवन्द्याम् ॥ १८ ॥

स्वैक्येन त्रिभुवनमातरं मृडानीम्
ध्यात्वैवं निजकुलकामधेनुमेनाम् ।
हृत्पद्मं पुनरपि जीवमानयेत् स्वम्
आकाशाम्भोरुहकुटीरनिविष्टहंसात् ॥ १९ ॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
प्रथमः पटलः ॥

---

रचितानि यान्याभरणानि तैरभिरामां मनोहराम् । रुचिरदन्तमरीचिवीचिधौतारुणाधरदलां रुचिरा मनोहरा ये दन्तानां मरीचयो रश्मयस्तेषां वीचिभिस्तरङ्गरूपैर्धौतं निर्मलीकृतम् अरुणाधरपल्लवं यस्याः ताम् । सुरवृन्दैर्देववृन्दैर्वन्द्यां सेविताम् ॥ स्वैक्येनेति एनां त्रिभुवनजननीं भवानीं स्वैक्येन आत्मैक्येन विचिन्त्य पुनरपि जीवात्मानम् आकाशपद्मकुटीरनिविष्टपरमात्मनः सकाशात् स्वीयं हृत्कमलम् आनयेत् । हंस इति मन्त्रेण चतुर्विंशतितत्त्वान्यपि स्वं स्वं स्थानं नयेत् इत्यन्यग्रन्थस्वरसात् । इति भूतशुद्धिः ॥ १२—१९ ॥

इति त्रिपुरासारसमुच्चयटीकायां प्रथमः पटलः ।

# द्वितीयः पटलः ।

अङ्गुष्ठादिकनिष्ठिकावधिकरद्वन्द्वाङ्गुलीषु न्यसेत्
वाणान् पञ्च गुरूपदिष्टविधिना ब्रूमो वयं तानिह ।
अद्रीशो मुखवृत्तवह्निसहितस्त्वाद्यं सदण्डस्त्विमु-
र्व्याक्रान्ताननवृत्तमेव खलु तद्बीजं द्वितीयं भवेत् ॥ १ ॥
मुखान्तस्थितं देवराजाधिरूढं सवामेक्षणं वक्त्रपूर्वेण युक्तम् ।
भपूर्वं सवृत्तारिषष्ठस्वराढ्यं चपेशं कतुर्य्यं कपूर्वेण युक्तम् ॥ २ ॥
न्यस्याङ्गान्यपि चाङ्गुलीषु करयोः स्थित्या कलान्यासकम्
कुर्य्यात् साधकपुङ्गवो भगपरं माया कुलान्तं क्रमात् ।
वीजानां त्रयमर्द्धचन्द्रसहितं विन्यस्य मूर्ध्नि स्वके
सानन्तं मुखवृत्तके कगतकं संवर्त्तकं विन्यसेत् ॥ ३ ॥

---

एवं भूतशुद्धिं विधाय परदेवतास्वरूपमात्मानं बुद्ध्वा वक्ष्यमाणं न्यासजालं विदधते इत्याह अङ्गुष्ठेत्यादिना । अङ्गुष्ठोपक्रमकं कनिष्ठान्तं हस्तद्वयाङ्गुलीषु वाणान् न्यसेत् । ते च द्रावणक्षोभणवशीकरणमारणमोहनाः पञ्च वाणाः तेषां वीजान्याह क्रमशः । अद्रीश इति । अद्रीशोदकारः मुखवृत्तः न्यस्तव्याकारः वह्नीरेफः ताभ्यां सहितोऽद्रीश आद्यं वीजं भवेत् सदण्डः सानुस्वारः तेन द्रामिति वीजं भवति तदेव वीजं विमूर्व्या ईकारेण आक्रान्तम् अनेन स्थानं यस्य तत् द्वितीयवीजं भवति एतावता द्रीमिति भवति ॥ १ ॥

तृतीयवीजमुद्धरति मुखेति । मुखे न्यस्यत इति मुखं विसर्गः तदन्तः ककारः तदुद्धरेत् । कीदृशं देवराज इन्द्रः तद्बीजं लकारः तदुपरि स्थितं वामचक्षुषि न्यस्यते इकारः तत्सहितं वक्त्रे न्यस्यते यो विसर्गः तत्पूर्वो विन्दुः तेन युक्तम् एतावता क्लीमिति वीजं भवति । चतुर्थमुद्धरति भपूर्वो वकारः वृत्तारिणा लकारेण षष्ठस्वर ऊकारस्तेन च सहितम् एतावता व्लूमिति वीजं भवति । पञ्चमवीजमुद्धरति कं जल तद्बीजं वकारः तत्तुरीयः सकारः ककारपूर्वो विसर्गः तेन सहितम् एतावता सः इति भवति । सर्वत्र वीजं भवेदित्यनुषङ्गः ॥ २ ॥

न्यसेति । स्थितिन्यासोक्तविधिना उभयकराङ्गुलीषु करतलयोश्च विन्यसेत् ।

सूक्ष्मादींश्चतुरो युगे नयनयो र्न्यस्येत्ततः श्रोत्रयोः
सार्द्धेन्दून् स्वकपोलयोर्भृगुयुगं घ्राणद्वयेनान्वितम्।
चन्द्रार्द्धाङ्कितमस्तकञ्च चिवुके श्वेतद्वयं विन्यसेत्
पश्चाद्गण्डयुगान्वितं शशिकुलोपेतोत्तमाङ्गं बुधः॥ ४॥
दन्तपंक्तियुगले वकद्वयं सेन्दुखण्डरदनच्छदद्वयम्।
ओष्ठयोर्घटयुगं ततो न्यसेद्दन्तयुग्ममुखपूर्वसंयुतम्॥ ५॥
रसं नाभावर्द्धोडुपयुतममुं न्यस्य पवनम्
न्यसेन्मन्त्री सान्त्यस्वरमपि शिखायामवहितः।

---

न्यासो हि ब्रह्मचारी गृही मुमुक्षुरित्यधिकारिभेदात् सृष्टिस्थितिसंहारात्मना त्रिविधः। मध्यमादि कनिष्ठान्तं न्यसेत् प्राहुरिमां स्थितिम्। अङ्गुष्ठान्तं कनिष्ठादि सृष्टिन्यासोऽभिधीयते। अङ्गुष्ठादि कनिष्ठान्तं संहारन्यास ईरितः। नाभ्यादि-केशपादान्तं स्थित्या देहे न्यसेत् सुधीः। केशादिपादपर्य्यन्तं सृष्टिन्यासोऽभिधीयते। पादादि केशपर्य्यन्तं संहारन्यास ईरितः। एवं यथाधिकारं विन्यस्य वक्ष्यमाण-कलान्यासं कुर्य्यात्। तमेवाह भग एकारः तत्परम् ऐकारः माया भुवनेशीवीजं ह्रीं। कुलान्तं कुलविद्यायाः अन्तं सौः इति। साम्प्रदायिकास्तु अकुलान्तम् अकुलोऽकारः तस्यान्तं चकार इति वदन्ति। एतद्वीजत्रयं स्वके मूर्द्ध्नि न्यसेत्। सानन्तं मुखवृत्तके इति संवर्त्तकः चकारः सानन्तम् आकारयुक्तं चगतं के शिरसि गतं विन्दुरित्यर्थः। तेन चामिति मुखवृत्तके न्यसेत्॥ ३॥

सूक्ष्मादीनिति। सूक्ष्म ईकारः स एव आदिर्येषां ते सूक्ष्मादयः। सार्द्धेन्दून् सविन्दुकानित्यर्थः। तेन इं ईं उं ऊं इति नयनयोः श्रोतयोश्च न्यसेत्। स्वक-पोलयोर्भृगुयुगं सकारयुगं घ्राणद्वयेनान्वितं ऋ ॠ इत्यनेनान्वितं सृं सॄं इत्यर्द्ध-चन्द्रान्वितं स्वकपोलयोर्न्यसेत्। चिवुके श्वेतद्वयं श्वेतः षकारः गण्डयुगं ऌ ॡ शशिकुलं विन्दुः विन्दु शिरस्कं तेन षॢं षॣं इति वीजद्वयं चिवुकपार्श्वयोर्न्यसेत्॥ ४॥

दन्तपंक्तियुगले वकद्वयं शकारद्वयम्। इन्दुखण्डो विन्दुः सविन्दुक वदनच्छद-द्वयम् ए ऐ विन्दुसहितमित्यर्थः॥ तेन शें शैं इति दन्तपङ्क्त्योर्न्यसेत्। ओष्ठयो-र्घटयुगं घटो वकारस्तद्द्वयं दन्तयुगम् ओ औ मुखं विसर्जनीयः तत्पूर्वो विन्दुः सविन्दुकमित्यर्थः। तेन वों वौं इति वीजद्वयं ओष्ठयो र्न्यसेत्॥ ५॥

कलान्यासं कुर्वन्नमुमिह यथोक्तेन विधिना
चिरं जीवत्यङ्गा विगतगदमृत्युः सुखमिह ॥ ६ ॥

पश्चाद्द्वे केवला मातृका वा विन्यस्तव्या रुद्रशक्त्यान्विता वा ।
विद्यान्यासं साधकेन्द्रस्ततोऽङ्गन्यासं चास्य न्यासपूर्वं विदध्यात् ॥ ७ ॥

विद्यान्यासं मूलमन्त्रस्य वर्णैः कुर्य्यान्मन्त्री वक्ष्यमाणक्रमेण ।
आद्यं वीजं मूर्ध्नि गुह्ये द्वितीयं तार्त्तीयं वा विन्यसेत् हृत्प्रदेशे ॥ ८ ॥

सव्यापसव्येक्षणयोर्ललाटे वीजत्रयं श्रोत्रयुगे च वक्त्रे ।
अंसद्वये चापि च पृष्ठवंशे वीजत्रयं कूर्परयोश्च नाभौ ॥ ९ ॥

---

रसं नाभाविति । रसोरेफः अर्द्धोडुपोविन्दुः तेन रमिति नाभौ न्यसेत् । पवनं यकारः अन्त्यस्वरो विसर्जनीयः । तेन यमिति शिरसि न्यसेत् । अवहितः सावधानः इति षोड़शकला न्यसेत् । न्यासफलमाह—अमुं न्यासं कुर्वन् उक्तविधिना असौ साधकः रोगमृत्युरहितः सुखं यथा स्यात्तथा अध्यात्मतत्त्वेन जीवति ॥ ६ ॥

षोड़शकलान्यासानन्तरं मातृकां केवलां रुद्रशक्त्यान्वितां वा यथास्थानं न्यसेत् । रुद्राः श्रीकण्ठादयः शक्तयः पूर्णोदर्य्यादयः । न्यासस्थानानि शारदायाम् । ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः । ओष्ठदन्तोत्तमाङ्गास्यदोःपत्सन्ध्यग्रकेषु च । पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेऽंसके । ककुद्यंसे च हृत्पूर्वं पाणिपादयुगे तथा । जठराननयोर्न्यसेन्मातृकार्णान् यथाक्रमात् । त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रात्मकान् विदुः । यादीन् ह्रादीन् न्यसेदात्मपरमज्ञानपूर्वकान् । प्रयोगस्तु—अं श्रीकण्ठपूर्णोदरीभ्यां नमो ललाटे इत्यादि । ततोऽनन्तरं विद्यान्यासं कुर्य्यात् ॥ ७ ॥

विद्यान्यासप्रकारमाह विद्येति । वक्ष्यमाणप्रकारेण मूलमन्त्राक्षरैर्विद्यान्यासं कुर्य्यात् । प्रथमं वीजं मस्तके द्वितीयं गुदे तृतीयं हृदये न्यसेत् । इत्येको न्यासः ॥ ८ ॥

सव्येति । वामदक्षिणनेत्रयोराद्यं द्वयं तृतीयं ललाटे अन्यः । कर्णयुगे वक्त्रे चैकन्यासः । अंसद्वये पृष्ठे च एको न्यासः । जानुयुगे नाभौ च एको न्यासः ।

वीजत्रयेणैव षड़ाननानि प्रकल्पयेदूर्द्ध मुखादि विद्वान्।
अङ्गानि मूलेन च गुह्यनाभिहृद्वक्त्रमूर्द्धस्वपि पञ्च वाणान् ॥१०॥
ललाटदेशे वदने हृदि स्वे नाभौ च गुह्ये ऽपि च विन्यसेत्तान्।
त्रैलोक्यसंक्षोभणदृष्टशक्तीन् पञ्चापि कामानपि वक्ष्यमाणान्
॥ ११ ॥
इहं कामराजमन्मथकन्दर्पमकरकेतनाश्चापि।
नामभिरेतैर्गदिता मनोभवेनान्विताः क्रमशः ॥ १२ ॥

कपञ्चमं शुचिनयनान्तसंयुतम्
सवामदृक्पवनगुणान्वितः करः।
रविस्वरो हरिहयविष्णुषष्ठवद्
वलं ततस्तर उपरान्वितो भृगुः ॥ १३ ॥

---

ऊर्द्धादीदक्षिणवक्त्रे च एको न्यासः। तथा वामापरमध्यवक्त्रेषु एकः। एवं सप्तमूलविद्यां न्यसेदिति ॥ ९ ॥

वीजत्रयेणेति। मूलमन्त्रवीजैस्त्रिभिर्द्विरुक्तैः षड़ङ्गानि प्रकल्पयेत्। यदुक्तं त्रिपुरार्णवे—ऊर्द्धादि परवक्त्रान्तं विद्यान्यासं समाचरेत्। ऊर्द्ध पूर्वे तथा वामे पृष्ठे दक्षे तथा क्रमादिति। गुह्यनाभीति। गुह्यनाभिहृदयाननमूर्द्धसु पूर्वोक्तवाणपञ्चकं न्यसेदिति ॥ १० ॥

कामन्यासमाह ललाटेति। वक्ष्यमाणाम् पञ्च कामान् ललाटादिपूक्तस्थानेषु न्यसेत् ॥ ११ ॥

तान् कथयति इहेति। एते पञ्च कामाः नामभिः कथिताः ॥ १२ ॥

एषां वीजानि कथयति कपञ्चममिति। कं जलं तद्वीजं वकारः तत्पञ्चमो हकारः शुचिना अग्निवीजेन रेफेण नयनान्तेन ईकारेण च युक्तं तेन ह्रीमिति भवति। इति प्रथमवीजम्। वामदृक् ईकारः पवनो यकारः तद्गुणाक्षरं तृतीयाक्षरं लकारः करः ककारः। ककारलकारेकारैः कामाख्यं वीजं द्वितीयम्। रविस्वरः द्वादशस्वरः ऐकारः तृतीयं वीजम्। हरिहयो लकारः विष्णुः टकारः ततः षष्ठस्वर ऊकारः। वलं वकारः वकारलकारौकारैश्चतुर्थम्। एतावता

तेषां शिरःसु विदधीत बुधोऽर्द्धचन्द्रा-
नेवं मया निगदिताः खलु पञ्च कामाः।
पुंसः स्मराननुदिनं न्यसतः स्वदेहे
लोकत्रयं भवति तस्य मनोऽनुवृत्तिः॥ १४॥

अथ त्रिलोकार्च्चितशासनाया वक्ष्यामि बीजत्रयमम्बिकायाः।
गोप्यमेतत् कुलधर्मविद्भिरामुष्टहेतोर्निजसिद्धये च॥ १५॥

कान्तादिभूतपदगं कगतार्द्धचन्द्रम्
दन्तान्तपूर्वजलधिस्थितवर्णयुक्तम्।
एतज्जपन्नरवरो भुवि वाग्भवाद्यम्
वाचां सुधारसमुचां लभते स सिद्धिम्॥ १६॥

कान्तान्तं कुलपूर्वपञ्चमयुतं नेत्रान्तदन्तान्वितम्
कामाख्यं गदितं जपन्मनुवरं साक्षाज्जगत्क्षोभकृत्।

---

वूमिति। तर इति स्वरूपं उपरः ईकारः भृगुः सकारः सकारतकाररेफेकारैः पञ्चमं तेन स्त्रीमिति॥ १३॥

तेषां शिरःसु विदधीत बुधोऽर्द्धचन्द्रानिति। एतानि बीजानि प्रत्येकं विन्दुभिः कामराजमन्मथकन्दर्पमकरकेतनमनोभवनामभिः संयोज्य न्यसेदित्यर्थः॥ १४। १५॥

कान्तादिभूतपदगमिति। ककारोऽनुस्वारः स एवान्तो यस्यौकारस्य तस्यादिभूतपदगम् आदिचतुर्दशपदगम् अकारः यद्वाकान्तो विसर्गस्तस्यादिभूतपदगम् आदौ स्थितं यत् स्वरूपमकारः तमुद्धरेत्। कगतार्द्धचन्द्रं के मस्तके गतोऽर्द्धचन्द्रो यस्य तादृशं शिरोगतानुस्वारमित्यर्थः। दन्त औकारः तदन्त औकारः तत्पूर्वजलधिस्थित-वर्णयुक्तं तत्प्रातिलोम्येन चतुर्थमक्षरं एकारः कगतार्द्धचन्द्रं सविन्दुकमित्यर्थः। एतैः सहितायां वृद्धौ सत्यां ऐं इति वाग्भवाख्यो महान् मन्त्र उद्धृतः। एतद्वाग्भवनामकं बीजं जपन् अशेषामृतमयीं वाक्सिद्धिं लभते। गद्यापद्या शिवानी अस्माद्भवतीति वाग्भवमिति प्रथमं मूलमन्त्रबीजम्॥ १६॥

द्वितीयं बीजमुद्धरति कान्तान्तमिति। के मस्तके न्यस्त इति कं विन्दुः तस्यान्तो विसर्जनीयः अः इति वदन्तः ककारः। कुलं सकारः तत्पूर्वपञ्चमं तत्प्रातिलोम्येन पञ्चमो लकारः। तदन्त ईकारः दन्तो विन्दुः ककारलकारेकारेण एतवता क्लीमिति

दन्तान्तेन युतं सदन्ति सकलं सम्मोहनाख्यं कुलम्
सिध्यत्यस्य गुणाष्टकं खररता सिद्धिश्च नित्यं जपेत्॥ १७ ॥

ऋषिर्दक्षिणामूर्त्तिसंज्ञो महात्मा
भवेच्छन्द एतस्य मन्त्रस्य पङ्क्तिः।
सरस्वत्यचिन्त्यप्रभावा प्रदिष्टा
बुधै र्देवता देववृन्दार्चिताङ्घ्रिः॥१८॥

अमुष्य मन्त्रस्य रदान्तयुक्तजम्
वीजं सदन्तं नकुलीशपूर्वम्।
शक्तिस्तु साखण्डलकर्णपूर्वम्
सहार्द्धजैवातृकमाननान्तम्॥ १९॥

वर्णः शुक्लो मुनिभिस्त्रिभुवनसहितस्य मन्त्रराजस्य।
आगमपारगमतिभिर्गान्धारोऽस्य स्वरो गदितः॥ २०॥

विद्यामूलोत्पत्तिरेषा मयोक्ता ज्ञातव्येयं सर्वथा सिद्धिकामैः।
देव्या शप्ता येन विद्येयमाद्या पूर्वं तेन प्राणहीनाऽभवत् सा ॥२१

---

कामराजाख्यवीज गदितं उक्तम्। अयं मन्त्रो जपादेव जगत्क्षोभकृत् भवति। तृतीयं वीजमुद्धरति। दन्तान्तेति दन्तानामन्त्यपङ्क्तौ न्यस्त इति दन्तान्त औकारः तेन युतं कुलं सकारमुद्धरेत्। कीदृशं सदन्ति सानुस्वारं सकलं विसर्गसहितम् अस्य वीजत्रयजपादणिमादिसिद्धिर्भवति खेचरीसिद्धिश्च भवति। अणिमा लघिमा गरिमा प्राकाम्यं वशितेशिता। प्राप्तिः कामावसायित्वं शम्भोरैश्वर्य्यमष्टधा। एतद्वीजत्रयात्मकः त्रिपुरामन्त्रः ऋष्यादिः श्लोकः सुगमः॥ १७॥ १८॥

अस्य मन्त्रस्य वीजशक्ती आह अमुष्येति। रद औकारस्तस्मात् औकारः नकुलीशो हकारः ततपूर्वं सकारः दन्तोविन्दुः एतेन सौं इति वीजं विद्यादित्यध्याहार्य्यम्। शक्तिस्तु आखण्डलेन कर्णपूर्वेण ईकारेण अर्द्धजैवातृकेण अर्द्धचन्द्रेण च सहितम् आननान्तं ककारं जानीयात्। तथाचास्य मन्त्रस्य सौं वीजं क्लीं शक्तिः शुक्लो वर्णः गान्धारः स्वर इति॥ १९। २०॥

विद्येति। विद्याया मूलोत्पत्तिरेषा मयोक्ता इयमुत्पत्तिर्विद्यासिद्धिलिप्सुभिर्ज्ञातव्या। देव्येति इयं विद्या देव्या शप्ता तेन प्राणशून्याऽभवत्॥ २१॥

शिवशक्तिवीजमत एव शम्भुना
निहितं तयोरुपरि पूर्ववीजयोः।
अकुलं कुलोपरि च मध्यमाधरे
दहनं ततः प्रभृति सोर्जिताऽभवत् ॥ २२ ॥
भैरवीयमुदिता कुलपूर्वा देशिकैर्यदि भवेत् कुलपूर्वा।
सैव शीघ्रफलदा भुवि विद्येत्युच्यते पशुजनेष्वतिगोप्या ॥ २३ ॥
शिवाष्टमं केवलमादिवीजं भगस्य पूर्वाष्टमवीजमन्यत्।
परं शिरोऽन्तं गदिता त्रिवर्णा सङ्केतविद्या गुरुवक्त्रगम्या ॥ २४॥
कान्तान्तवान्ताकुलवामनेत्रान्वितं तथा दन्तिकुलं सनादम्।
षट्कूटमेतत्त्रिपुरार्णवोक्तमत्यन्तगुह्यं स्मर एव साक्षात् ॥ २५ ॥

---

शिवेति। यत इयं विद्या भवान्या शप्ता अतएव हेतोः तयोराद्यवीजयोरुपरि शिवशक्तिवीजं हस इति वीजं निहितम्। उक्तं हि सङ्कोचः परमा शक्तिः विकाशः परमः शिवः। सङ्कोचश्च विकाशश्च हसमित्यक्षरद्वयमिति ॥ परस्यान्त्यवीजस्योपरि अकुलं हकारो निहितः। मध्यवीजस्याधरे अकुलं हकारो निहितः। मध्यवीजस्याधरेऽधः रेफो निहितः। तदवधि सा विद्या तेजोवती जाता ॥ २२ ॥

भैरवीयमिति। इयं बाला विद्या अकुलपूर्वा हकारपूर्वा सती भैरवी उक्ता सैव भैरवी यदि कुलपूर्वा सकारपूर्वा भवति तदा विद्येत्युच्यते। पशुजनेषु अल्पज्ञेषु अप्रकाश्या यद्वा पशुजनेषु अदीक्षितेषु। तथाच एतन्मन्त्रस्य भेदत्रयं भवति वाग्भवाद्यम्। बाला अकुलपूर्वा सती भैरवी कुलपूर्वा सती विद्येति ॥ २३ ॥

वीजत्रयोपलक्षितं स्वकूटमाह शिवाष्टममिति। शिव उकारस्तस्याष्टम ऐकारः भग एकारः तत्पूर्वाष्टमं ईकारः परं तृतीयम्। शिरोविन्दुः तदन्तो यस्य स औकारः स तृतीयवीजोपलक्षकः इयं त्र्यक्षरी। सङ्केतविद्या कथिता गुरूपदेशैः परं बुध्यते ॥ २४ ॥

वीजान्तरमाह कान्तान्तेति। कं विन्दुस्तस्यान्तो विसर्जनीयः तदन्तः कः वान्तः वकारोऽन्तो यस्य स लकारः अकुलो हकारः सकारोऽन्तो यस्य स रेफः वामनेत्रम् ईकारः दन्तोविन्दुः कुलं सकारः सानुस्वारं सनादम् एतत्त्रिपुरातन्त्रोक्तं षट्कूटं षड्भिर्वर्णैर्वीजम् अतिशयेन गोप्तव्यम् अयं मन्त्रः साक्षात् स्मर एव ॥ २५ ॥

आद्यं वीजं मध्यमे मध्यमादावन्त्यं चान्ते योजयित्वा जपेद्यः।
त्रैलोक्यान्तःपातिनो भूतसङ्घा वश्यास्तस्यैश्वर्य्यभाजो भवेयुः ॥२६

आद्यं कृत्वा चावसानेऽन्त्यवीजम्
मध्ये मध्यं चादिमे साधकेन्द्रः।
कुर्य्यान्नित्यं यो जपेन्मन्त्रमेनम्
जीवन्मुक्तः सोऽश्नुते दिव्यसिद्धिम् ॥ २७ ॥

मन्त्रराजममुं समस्तजगद्विमोहनकारकम्
मातृकान्तरितं जपेदनुलोमतोऽपि विलोमतः।
हंसदेवसमन्वितं सकलं बुधः पर एव वा
सोऽपि दिव्यगुणान्वितो लभते सुसिद्धिमनुत्तमाम् ॥ २८ ॥

---

अथ कामनाभेदेन जप्तव्यमन्त्रभेदानाह आद्यमिति। आदिम वीज मध्यवीजस्थाने मध्यवीजञ्चादिवीजस्थाने अन्त्यं खस्थाने एवं योजयित्वा य एनं मन्त्रं जपेत्। तस्य त्रैलोक्यवर्त्तिनः प्राणिनः वश्या भवन्ति ऐश्वर्य्यञ्च भवति इत्येकः प्रकारः ॥ २६ ॥

अपरमाह आद्यमिति। आद्यं वीजं अन्त्ये अन्तिमञ्च मध्ये मध्यमञ्चादौ कृत्वा प्रत्यहं य एनं मन्त्र जपति स जीवन्नेव मुक्तो भवति दिव्यानाञ्च या सिद्धिस्तां लभते ॥ २७ ॥

मन्त्रराजमिति। य एनं मन्त्रश्रेष्ठम् अनुक्रमेण व्युत्क्रमेण च मातृकान्तरितं कृत्वा जपति स दिव्यगुणभाक् स तु अतुलां सिद्धिमाप्नोति। तत्र क्रमः मन्त्रमुच्चार्य्य अन्ते अकारमुच्चरेत् पुनरपि मन्त्रमुच्चार्य्य आकारमुच्चरेत् एवं लकारपर्य्यन्तमक्षराणि। मन्त्रान्तरितं जपं कृत्वा पुनर्मन्त्ररहितं केवलं क्षकारमेव स्थानीयमुच्चार्य्य पुनः प्रतिलोमक्रमेण लकारादिं अकारपर्य्यन्तं प्रत्येकं मन्त्रान्तरितं जपेत्। एवं मातृकाक्षमालया जप कुर्वतामेकवारेण जपः शतसंख्यापरिमितो भवतीत्यर्थः। शारदातिलके राघवभट्टेन एवं व्याख्यातम्। अकारादिहकारान्तां मातृकां पठित्वा मध्ये मन्त्रं पठेत्। ओं नमः वर्णोऽयं ततः क्षकाराद्यकारान्तां मातृकां पठेत्। ततोऽतुलां सिद्धिं लभते। एतत्तु प्रकारान्तरम्। हंसदेवमित्यादि मूलमन्त्रः

व्यञ्जनहंससमन्वितमेतद्व्यञ्जनहृज्जगतो निखिलस्य ।
यो जपति स्थिरनिर्मलचित्तः शीघ्रमुपैति नरः स तु सिद्धिम् ॥२९॥
कमलं परिलुप्तमध्यमान्त्यस्वरमीशादियुतं सबिन्दुनादम् ।
निगमादिनमोऽन्तरे विराजद्भवि देवी हृदयं प्रविष्टमेतत् ॥३०॥

विद्या कामदुघा त्रिलोकविनुता स्वर्गापवर्गप्रदा
गुह्याद्गुह्यतरा महोदरकरी या योगिनीनामिह ।
सा सारस्वतजन्मभूर्निगदिता सौभाग्यसम्पत्करी
सद्यः प्रत्ययकारिणी सकृदपि प्रोच्चारिता भूतले ॥३१॥

यतः स्वप्नावस्थामियमुपगता विश्वविनुता
ततः सिद्धिं नैव प्रवितरति जप्तापि सततम् ।
प्रबुद्धा चेद्विद्या फलति सहसा दीपनकरीम्
ततो विद्यां वक्ष्याम्यहमिह रहस्यामतितराम् ॥ ३२ ॥

---

बीजत्रयं यकारसकाराभ्यां संयोज्य जपेत् । पर एवेति । श्रीमूलविद्यायाः प्रथम-मध्यमे बीजे केवले उच्चार्य्य अन्तिमं बीजं हंकारसकाराभ्यां संयोज्य जपेदित्यर्थः ॥२८॥

व्यञ्जनहंसेति । हकारसकारयोरन्तर्गताकारानुस्वारान्तिमविसर्जनीयमपि लोपयित्वा केवलव्यञ्जनमात्रमेव विद्यया संयोज्य जपेत् सोऽप्यनुत्तमां सिद्धिं प्राप्नोति तदुक्तं प्रत्यक्षरार्थं हंसेन ग्रथयित्वा जपेत् सुधीरिति ॥ २९ ॥

कमलमिति । कमलस्वरूपमेवोद्धरेत् कीदृशं परिलुप्तो मध्यमोऽन्त्यस्वरश्च यत्र तादृशं मकारान्त्यस्वरशून्यं क एवंरूपः । ईशः शिव लकारस्तस्यादिरीकारः सबिन्दु-नादं तद्युक्तं तेन ककारलकारेकारबिन्दुनादैः क्लीमिति कामाख्यबीजम् । निगमादिः प्रणवः । नम इति स्वरूपग्रहणं प्रणवनमसोर्मध्ये कामबीजे निहिते चतुरक्षरात्मिका देवी हृदयाख्या विद्या स्यात् । प्रासङ्गिकमुक्त्वा भैरवीं स्तौति ॥ ३० ॥

विद्येति । सा विद्या इह भूतले च या विद्या योगिनीनां महोदयकरी तत्त्व-ज्ञानजनिका कामदुघा ईप्सितार्थप्रदायिनी अनिर्वाच्या । वारैकमपि जप्ता सती प्रत्ययदायिनीति ॥ ३१ ॥

यत इति । यतो हेतोः सुप्तावस्थां गता इयं विद्या अतो वारंवारमपि जप्ता सिद्धिं

पुष्पं वारिमुचां दवादिरपरस्तावेव वर्णौ ततो
दीर्घं वारिसखान्तमप्स्वपि तथा धान्तौ सलोकस्वरौ।
विद्या वाग्भवबीजदीपनकरी सारस्वतोत्पत्तये
साक्षात्काङ्क्षितपारिजातलतिका वत्सत्वरोक्ता मया ॥३३॥
ब्रह्मा शक्रदृगन्वितः सहभगा मेषान्विता नादिनी
कान्तान्तं सभगं सपूषणमतोधान्तं त्रिमेषः सदृक्।
कालोऽनन्तयुतं वियत् सदशनः संवर्त्तको भीषणा
साक्रूरा कमलासनः सहशिवो वैश्वानरस्तादृशः ॥३४॥

---

न ददाति प्रबुद्धा यदि भवति तदा हठात् फलं ददाति अतो हेतोर्दीपनीं विद्यामस्या अहं कथयामि रहस्यां गोप्याम्। गोपनीये रहः स्मृतम् ॥ ३२ ॥

बलाद्यबीजदीपनमाह पुष्पमिति। मेघानां पुष्पं जलं तद्बीजं वकारः तमुच्चरेत्। अपरो रवर्णः दवादिर्दवशब्दस्यादिभूतो दकारः पुनस्तावेव वर्णौ रकारदकारौ तदनन्तरं दीर्घम् आकारसहितं वारि जलबीजं सखा तस्यान्तेन गकारेण वर्त्तत इति खान्तः भकारस्तमुद्धरेत्। अप्सु वकारः तथा दीर्घस्तेन वाग्वा इति भवति लोकस्वरयुतौ धान्तौ धोऽन्ते यस्य स दकारः धस्यान्तो नकारः दकारनकारौ लोकशब्देन त्रिसंख्योपलक्षितः तत्संख्यक इकारः तेन युतौ एतावता वद वद वाग्वादिनि इति भवति। इयमष्टाक्षरी विद्या वाग्भवोपलक्षितबीजसन्दीपनजनिका सारस्वतधर्मोत्पत्तये आकाङ्क्षितार्थे कल्पलतेव ॥ ३३ ॥

द्वितीयबीजदीपनमन्त्रमाह ब्रह्मेति। ब्रह्मा ककारः शक्रेण दृशा च युक्तः शक्रः इन्द्रः तद्बीजं लकारः दृशि चक्षुषि न्यस्यत इति दृक् इकारः प्रथमोपात्तत्वाद् ह्रस्वपरिग्रहः। नादिनी लकारः भगेन एकारेण मेषेण लकारेण चान्विता उद्धर्त्तव्या कस्यान्तः खः सोऽन्ते यस्य सकः सभगम् एकारसहितं सपूषणं सलकारम् अनन्तरं धान्तं दकारम् उद्धरेत्। इस्वरूपो मेषो लकारः सदृक् इकारसहितः। कालो मकारं समुद्धरेत्। अनन्तेन आकारेण युतं वियत् हकारमुद्धरेत्। सदशनः औकारसहितः संवर्त्तकः क्षकार उद्धर्त्तव्यः। भीषणा भकारः साक्रूरा सानुस्वारा कमलासनः ककारः उकारसहितः वैश्वानरो रेफः तादृशः उकारसहित उद्धर्त्तव्यः। एतावता क्लिन्ने क्लेदिनि महाक्षोभं कुरु इति भवति ॥ ३४ ॥

एकादशाक्षरीयं मन्मथवीजप्रबोधनकरी स्यात् ।
क्षोभयति नाकभूतलस्थानवासिनः सहसा ॥ ३५ ॥

सावित्री वदनयुता महादिकाली
व्योमान्तं शशधरखण्डमण्डितान्तम् ।
मोहिन्या सरसिजभूर्युतस्तथाग्नि-
र्विद्येयं परबीजदीपनी सा ॥ ३६ ॥

या यस्य दीपनकरी गदितेह विद्या
वीजस्य तस्य पुर एव समुच्चरेत्ताम् ।
विद्याषडङ्गवदनेषु यथावदेव
न्यासेषु साधकवरो विदधीत शश्वत् ॥ ३७ ॥

विद्याङ्गमेवं न्यसतः स्वदेहे त्रैलोक्यमेतद्वशमेति पुंसः ।
पापानि सद्यः प्रशमं प्रयान्ति त्रस्यन्ति रक्षांसि सपन्नगानि ॥३८

मन्त्ररूपमिदमीरितं मया सर्वथा गुरुमुखेन लभ्यते ।
गुर्वनुग्रहकृते महीतले मन्त्र एष न हि सिद्धिदायकः ॥३९॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
द्वितीयः पटलः ।

---

इयम् एकादशवर्णात्मिका विद्या मन्मथवीजस्य मध्यवीजस्य दीपिका भवेत् ॥३५॥

तृतीयवीजदीपनमाह सावित्रीति । सावित्रीपदेन श्रीङ्कारो लक्षितः महा-दिकाली महाकालीत्यर्थः । तदाद्यवर्णो मकारो लक्षितः वदन श्रीकारस्तेन युतः व्योम हकारः तदन्तं सानुस्वारम् उद्धरेत् मोहिन्या उकारेण सरसिजभूर्ब्रह्मा ककार उद्धर्त्तव्यः । ततो मोहिनो अतोऽग्निः रेफः एतावता श्रीं महामोचं कुरु इति सप्ताक्षरी परमवीजदीपनी उक्ता ॥ ३६ ॥

केन प्रकारेण दीपनयोग इत्याह या यस्येति । या विद्या यस्य वीजस्य दीपन-करी उक्ता तद्वीजस्य पुरतः प्रथमं तां विद्यामुच्चरेत् ॥ ३७ ॥

न्यासेषु दीपनीयोगमाह विद्येति । विद्यान्यासषडङ्गन्यासवदनन्यासेषु योज-नीयेति । एवं कृते विद्या प्रबुद्धा भवति । एवं प्रकारेण मूलविद्या मन्त्रस्याङ्गं स्वशरीरे न्यसतः पुंसः लोकत्रयं वशमेति पापानि शाम्यन्ति सद्य, सह ॥ ३८ ॥

## तृतीयः पटलः ।

अथेदं शरीरं स्वकीयाङ्गुलीभि-
र्बुधैः षण्णवत्यङ्गुलायाममुक्तम् ।
दिनेशाङ्गुलीभिः शरीरात् समीरो-
ऽधिकः प्राणसंज्ञो मतो योगविद्भिः ॥ १ ॥

इह प्राणवायुं सदाभ्यासतो यो नरो न्यूनभावं नयत्येनमङ्गात् ।
समत्वं शरीरेण वा भूतलेऽस्मिन् स पूज्यो बुधैरुत्तमो योगवित्स्
॥ २ ॥

चतुर्दशावाप घने प्रधाना नाड्यः स्मृतास्तास्वपि तिस्र एव ।
इड़ा सुषुम्नापि च पिङ्गलाख्या मुख्या सुषुम्नैव च तासु नाड़ी
॥ ३ ॥

---

इदं मायामन्त्रस्वरूपं कथितं गुरुणा वा यदि लभ्यते तदा परं सिध्यति अन्यथा गुरुप्रसादमन्तरेण एष मन्त्रो न सिध्यतीति ॥ ३९ ॥

इति त्रिपुरासारसमुच्चयटीकायां द्वितीयः पटलः ।

---

एवं साधकानां सकलपुरुषार्थसारभूतं मन्त्रस्वरूपमुक्त्वा पुरुषार्थान्तराय परिहाराय योगाङ्गभूतप्राणायामप्रकारान् तद्विशेषांश्च वक्तुमुपक्रमते अथेदं शरीरमित्यादिना। इदं शरीरं पण्डितैः षड़धिकनवत्यङ्गुलदैर्घ्यम् उक्तं यस्य शरीरस्य परिमाणं तस्यैवाङ्गुलिमानेन । प्राणसंज्ञको वायुः शरीरान्निर्गमस्थानाद्द्वादशाङ्गुलीभिरधिको मतः द्वादशाङ्गुलपर्य्यन्तं सञ्चरति ॥ १ ॥

इहेति। इह भुवि यो नरः सदाभ्यासतः सदाभ्यासेन एनं प्राणवायुं शरीरान्न्यूनभावं सकलाङ्गव्यापकत्वं नयति । शरीरेण समाङ्गत्वं तौल्यं वा आसनाङ्गव्यापकत्वं वा करोति स योगवतां मध्येऽस्मिन् भूतले पूज्यते इति ॥ २ ॥

प्राणाश्रयभूता नाड़ीं दर्शयति चतुर्दशेति। तदुक्तं नाडीनामाश्रयः पिण्डो नाड्यः प्राणस्य आश्रय इति। अस्मिन् शरीरे चतुर्दश नाड्यः प्रधानीभूताः सन्ति अपि चतुर्दशसु मध्ये चतस्रः प्रधानाः स्मृताः ॥ ३ ॥

इड़ा नाम नाड़ी स्थिता वामभागे
तनोर्दक्षिणे पिङ्गला नाम नाड़ी ।
तयोः पृष्ठवंशं समाश्रित्य मध्ये
सुषुम्ना स्थिता ब्रह्मरन्ध्रन्तु यावत् ॥ ४ ॥
सुषुम्नान्तराले स्थिता चित्रनाड़ी
युता पञ्चवर्णोज्ज्वला पञ्चदेवैः ।
तदन्तर्गतं ब्रह्मरन्ध्रं सुसूक्ष्मम
मृणालान्तरालोल्लसत्तन्तुतुल्यम् ॥ ५ ॥

---

तासां तिसृणां नामानि कथयति। इड़ेति। इडा पिङ्गला सुषुम्ना चेति तास्वपि तिसृषु मध्ये सुषुम्नैव प्रधानीभूता। चतुर्दशनाडीनां नामानि यथा। इडाच पिङ्गला चैव सुषुम्ना च सरस्वती। गान्धारी हस्तिजिह्वा च सुपूषा च यशस्विनी॥ अलम्बुषा कुहूश्चैव शङ्खिनी चित्रिणी तथा। विश्वोदरी विश्वमुखी व्याख्याता चतुर्दश॥ एतास्वपि तिस्रो मुख्याः यास्वपि योग. प्रतिष्ठितः तास्वपि सुषुम्नैव मुख्या सा च द्वादशान्तं पृष्ठवंश समाश्रित्य सकलाधारत्वेनाधोमुखी ऋजुभूता तिष्ठति। आधारो नाम पद्मस्थानात् द्व्यङ्गुलादूर्द्ध्वं मेढ्राद्द्व्यङ्गुलादधोभागे चतुरङ्गुलायामविस्तारं अधोमुखं त्वगादिधातुभिर्वेष्टितं चतुर्द्दलात्मकं पाण्डराकारं पद्मं तत्कर्णिकामध्ये त्रिकोणा योनिः तन्मध्ये सकलप्रपञ्चनिमित्तोपादानभूता कुण्डल्याख्या चिन्मयी शक्तिः त्रिगुणितादिरूपेण सर्य्येन्दुवैश्वानराणां मूलभूता भवति या त्रिकोणमुत्थिता सुषुम्ना नाम नाडो वीणादण्डाख्यपृष्ठवंशस्य पूर्वभागमवलम्ब्य ब्रह्मरन्ध्रपर्य्यन्तम् ऊर्द्ध्वाकारा तिष्ठति। तथाच तन्त्रचूडामणिः। मेरुदण्डे वहिः पार्श्वे चन्द्रसूर्य्यातिमण्डले। किम्वा मध्ये—सुषुम्ना सन्निविष्टा च तन्मध्ये चित्ररूपिणी। तत्रैव ग्रथितं पद्मं मूलादिपद्मपञ्चकम्। कलिकाकाररूपेण डाकिन्याद्यावलम्बितम्। मूलद्वारं समाच्छाद्य स्थिता नागस्वरूपिणी। वायुना भिद्यते मुक्तं दृढं चित्वा नयेत्ततः। तच्छ्वासोज्ज्वलकामस्य शिखयाऽतिसमुज्ज्वला। प्रतिचक्रप्रबुद्धा सा जीवात्मानं परे कुले। नियोजयति तद्‌योगादमृतं चरते चिरम्। व्योम प्रोज्झ्य नासाग्रे गतौ चन्द्रदिवाकरौ। अधोवक्त्रं महापद्मं क्रोडीकृत्य सुषुम्नया। व्यावृत्य नासिकामध्यं गतं चित्वा तु सङ्गता। ऊर्द्ध्वं भित्त्वा तु लिङ्गं

**ब्रह्मसूत्रमिदमेव देहिनां जीवभूतममृतैककारणम्।
यद्वदन्ति मुनयः पुरातना दिव्यमार्ग इति भव्यचेतसः॥ ६॥**

---

वै इतरान् पुष्करान् ततः। वशीकर्द्दमनाकाङ्क्षाकाङ्क्षिणी मोक्षदायिनी। जीवनादृष्टसम्बद्धा स्थिरा परमसंनिधौ। एतद्विदं विजानाति भित्वा याति परं पदम्। इत्यादि बहुशः। योगार्णवेऽपि। सुरशृङ्गाटपार्श्वेन तेनैव संव्यतः क्रमात् सूर्य्याचन्द्रमसौ नाड्यौ गते नासाद्वयावधि। तन्मध्ये द्वितीयं भित्वा सुषुम्ना पद्मकोटरे। ब्रह्मरन्ध्रावधिर्याता भित्वा व्योम सुरालयम्। सुविनाच्छाद्य तद्द्वारं कुण्डलीशक्तिरुज्ज्वला। निद्रावशगता देवी प्रसुप्तभुजगोपमा। तत्त्रिकोणस्य वामदक्षिणकोणयोः संभूते सुषुम्नाया वामदक्षिणभागे इडापिङ्गले स्थिते। तयोर्मध्ये इडा नाम नाड़ी चापाकृतिर्भूत्वा लिङ्गमूलस्थाने सुषुम्नामाश्लिष्य दक्षिणभागं गता तदाकारा पुनरपि नाभिस्थाने वामभागं गता। तदा पुनरपि हृदयस्थानमाश्लिष्य दक्षिणभागं गता। तदा करौ पुनरपि आनुमूलमाश्लिष्य वामनासापुटं गच्छति। एवं दक्षिणभागसम्भूता पिङ्गला सुषुम्नामाश्लिष्य दक्षिणनासाविवरं गच्छति। सुषुम्नामूलपुरोभागादुत्थिता आजिह्वान्तं सरस्वती नाम नाड़ी स्थिता। केचित्तु त्रयं वर्णयन्ति। एताः सुषुम्नास्तिस्रश्च यासु योगः प्रतिष्ठितः। ताश्च नासापुटद्वन्द्वब्रह्मरन्ध्रविनिर्गताः। सरस्वत्यादिचत्वारो मुखरन्ध्रविनिर्गताः। तास्वेका शब्दजननी अन्या स्वरसंवाहिनी। अपरा रसनाधारा परा तोयवहा शिवा। अन्याः षट्नेत्रकर्णाङ्गमेढ्रद्वारविनिर्गताः। शङ्खिनी नाभिसम्बन्धा या मातृ हृदि रुध्यते। यया गर्भगतः पिण्डः पुष्यतेऽन्नरसादिभिः। एताभ्य एव नाडीभ्यः शाखोपशाखप्रकारेण सार्द्धलक्षत्रयसंख्यानां नाडीनां सम्भवः। कुत्र का नाडी तिष्ठति इति शिष्याकाङ्क्षायामाह इडेति शरीरस्य वामांशमाश्रित्य इडा नाम नाडी दक्षिणभागे पिङ्गला तयोर्नाड्योर्मध्ये देहस्य पृष्ठवंशमाश्रित्य ब्रह्मरन्ध्रपर्य्यन्तं सुषुम्ना अवस्थितेति। सुषुम्नाया अभ्यन्तरे चित्रा नाडी स्थिता पञ्चभिर्वर्णैः श्वेतरक्तादिभिरुज्ज्वला पञ्चभिर्देवैर्ब्रह्मविष्णुरुद्रेश्वरसदाशिवैः संयुक्ता। तदुक्तम्। ब्रह्मा जनार्दनो रुद्र ईश्वरश्च सदाशिवः। चित्राख्यनाड्यन्तःस्थाश्च पञ्चभूताधिदेवताः॥ ४। ५॥

ब्रह्मेति। इदमेव ब्रह्मसूत्रं शरीरिणां प्राणभृतां जीवभूतम् अमृतैककारणम् अस्मिन्नेव ज्ञायते मरणं न चरतीत्यर्थः। यद्ब्रह्मसूत्रं प्राचीना मुनयो दिव्यमार्ग इति कथयन्ति निर्वाणोपयोगी स एव मार्ग इत्यर्थः॥ ६॥

इड़ायां चरत्येष शीतांशुमाली
अतो वामभागेऽमृतं सम्प्रदिष्टम्।
रविः पिङ्गलायां चरत्येष तस्मात्
विषं दक्षिणो भाग उक्तो मुनीन्द्रैः॥ ७॥

जानीयादुदयं बुधः स्वजठरे कन्देऽशरीरे नृणाम्
घ्राणात्तिग्मकराङ्गुले खलु लयं सन्ध्यौ च पूर्वापरे।
उत्पत्तिञ्च लयञ्च सन्ततमधोवृत्तिं निशां वासरम्
चोर्द्ध्वां वृत्तिमधस्तथा हिमकरं चोर्द्ध्वां दिनेशं गतिम्॥८॥

तुषारांशुनाड़ीं प्रपन्ने तु देवे
तदा शान्तिकादीनि कर्माणि कुर्य्यात्।
बुधो रौद्रकर्माणि मार्त्तण्डनाड़ी-
मुभे मिश्रकर्माणि नाड्यौ प्रपन्ने॥ ९॥

---

इडायामिति। एष शिशिरकिरणो वामे इड़ासंज्ञायां नाड्यां चरति तेन वामभागेऽमृतमुक्तं पिङ्गला वामादिभ्यश्चरति सा च दक्षिणभागमाश्रितेति स भागो विषसंज्ञकः आदित्यस्य खेचरत्वात् वायुनियमेन सिध्यतीति॥ ७॥

तस्योत्पत्तिविनाशज्ञानमाह जानीयादिति। बुधः अशरीरे वायोर्नृणां कन्दे मूलभूते आधारे चक्रे उदयम् उद्भवं जानीयात्। तथा आधारचक्रे गुदोपरि लिङ्गाधःस्थिते वायुर्वत्तिष्ठति घ्राणाद्वहिर्द्वादशाङ्गुले विनश्यतीत्यर्थः। तदेव स्थान-द्वयं पूर्वापरे सन्ध्यौ कन्दात् पूर्वसन्ध्या घ्राणे द्वादशाङ्गुलं वहिर्याति। पश्चादेतीति स्थानद्वयम् उत्पत्तिं लयं विनाशं च ते एव ज्ञातव्ये। आधारेति। वायोरधोगमनं निशां जानीयात् ऊर्द्ध्वगमनं वासरं दिवसं जानीयात्। उक्तं हि अहरेव प्राणो रात्रिरपान इति तथाधोवृत्तिं चन्द्रं जानीयात् ऊर्द्ध्वं गमनमिति। अतएव योगार्णवे वर्षत्यधोमुखश्चन्द्रः शोषत्यूर्द्ध्वमुखोरविरिति॥ ८॥

केन वायौ कानि कर्माणि कर्त्तव्यानीत्याह तुषारांशुनाड़ीमिति तुषा-रांशुनाड़ीं इड़ा गते वायौ शान्तिजनकानि कर्माणि कुर्य्यात्। सूर्य्यनाडीं पिङ्गलां गते वायौ रौद्राणि दारुणानि कर्माणि कुर्य्यात्। चन्द्रमसः शीतलांशु-

भूतानामुदयं द्वयोरपि बुधः संलक्षयेत् पक्षयो-
स्तत्राधो वसुधोदयं निगदितं मध्ये नासिकाया(?) दण्डस्पृशि ।
देवेऽधःस्पृशि वारिणो हुतवहस्योर्द्ध्वं गते तूदयम्
तिर्य्यक्संस्पृशि मारुतस्य परितः स्पृष्टे मरुद्वर्त्मनः ॥१०॥
वश्यस्तम्भनयोः प्रशस्त उदयो भूमेर्जलस्योदयः
शस्तः शान्तिकपौष्टिकादिषु शुभेष्वह्नाय वह्नेः पुनः ।
शत्रोर्मारणदारणादिकरणेषूच्चाटनोच्छासयो-
र्वायोः शान्तिकनिर्विषीकरणयोर्व्योम्नो हितस्योदयः ॥११॥

धरणेरुदये गदार्दितानाम्
यदि दूतः समुपेत्य पृच्छतीह ।
सहसा नहि रोगजा प्रबाधा
प्रशमं याति चिकित्सितापि सम्यक् ॥ १२ ॥

---

त्वात् मर्य्यस्य खरकरत्वादिति भावः । उभयनाडीस्थे वायौ शान्तिकानि रौद्राणि च कर्माणि कुर्य्यात् ॥ ९ ॥

भूतानामिति । द्वयोरपि पक्षयोः शुक्लकृष्णयोर्भूतानां पृथिव्यप्तेजोवाय्वाकाशानाम् उद्भवं संलक्षयेत् अवधारयेत् । तत्र भूतेषु मध्ये पृथिव्या उदयं प्राणमध्यदण्डगे वायौ यदा प्रशस्यते दण्डाकारगतिर्भवति तदा भूमेरुदयं जानीयात् । देवे वायौ अधःस्पृशि सति वारिणो जलस्य उदयं जानीयात् । ऊर्द्ध्वं गते वायौ हुतवहस्याग्नेरुदयं जानीयात् । तिर्य्यक् पार्श्वद्वयं संस्पृशि वायोरुदयं जानीयात् । समस्तनासारन्ध्रे व्यापके वायौ वहति सति मरुद्वर्त्मन आकाशस्य उदयं जानीयात् । ॥ १० ॥

एतज्ज्ञानफलमाह वश्येति । भूमेरुदये वश्यजनकं स्तम्भजनकञ्च कर्म कुर्य्यात् । जलभूतस्योदये सति शान्तिजनकं पुष्टिजनकञ्च कर्म कुर्य्यात् । झटिति स तु मारणादिजनके कर्मणि वह्नेरुदयः प्रशस्तः । शत्रोर्देशोन्मूलने नगरोच्छेदे च वायोरुदयः प्रशस्तः । निर्विषीकरणसान्त्वने च आकाशस्योदयः प्रशस्तः ॥ ११ ॥

प्रश्नमाह धरणेरिति । पृथिव्या उदये सति नैरुज्यमसुकस्य भविष्यति दूत आगत्य पृच्छति तदा रोगजा पीड़ा सद्यः कृतप्रतिक्रियापि हठेन शान्तिं नयतीति

जलोदये व्याधिरुपैति शान्तिं मृत्युर्भवत्येव वसूदये च।
तथोदये चापि समीरणस्य व्योम्नोऽचिरेणैव रुजां विनाशः ॥१३॥
देवे दक्षिणभागगेऽथ पुरुषो रोगातुरो दक्षिणे
स्थित्वा पृच्छति पृच्छकः स पुरुषो जीवत्यरोगश्चिरम्।
वामायां तु रुजाकुलीकृततनौ वामाश्रिते चेश्वरे
वामा पृच्छति चेत् स्थिता गतगदा वामा चिरं जीवति ॥१४॥
देवे गते पृच्छति वामभागं स्थित्वा नरो दक्षिणतो यदीह।
व्यत्यासतोऽस्मादपि कृच्छ्रसाध्यं वदन्ति सन्तः खलु रोगजातम्
॥ १५ ॥
अन्तर्गते पृच्छति पृच्छकश्चेद्देवे नरो जीवति वीतरोगः।
तेनैव रोगेण बहिर्गतेऽस्मिन् परेतराजस्य पुरं प्रयाति ॥ १६ ॥
सर्वेषु कार्य्येषु यदीश्वरेऽस्मिन् अन्तर्गते वाञ्छितसिद्धयः स्युः।
बहिर्गतेऽमङ्गलमीश्वरेऽपि शुभाशुभं कर्मफलं तु विद्यात् ॥१७॥

---

वक्तव्यमित्यर्थः। जलस्योदये सति यदि पृच्छति तदा व्याधिः शान्तिं याति। वसूदयेऽग्नेरुदये यदि पृच्छति तदा रोगार्त्तस्य मृत्युर्भवति। वसुहुताशनमिति विश्वः। वायोरुदये यदि पृच्छति तदा मृत्युरित्यर्थः। आकाशोदये यदि आगत्य पृच्छति तदा त्वरयैव रोगाणां विनाशो भवति ॥ १२। १३। १४ ॥

प्रकारान्तरमाह। देवे वायौ दक्षिणां सङ्गते सति तत्रैव स्थित्वा दूतो यदि पृच्छति तदा रोगार्त्तो जनो नीरोगः सन् बहुशतत्वयं जीवति। स्त्रियां रोगगतायां वामभागगतो वायुर्भवति तत्राश्रितो दूतः पृच्छति तदानीं रोगात् सा चिरं जीवति इति ॥ १५ ॥

देव इति। वामप्रदेशं गते वायौ दक्षिणांशं गत्वा दूतो यदि पृच्छति तदा कष्टसाध्यं नैरुज्यं वक्तव्यम्। दक्षिणगे वायौ वामभागगः पृच्छति तदा कष्टसाध्यं नैरुज्यं वदेत्। अन्तर्गत इति। अभ्यन्तरं गते वायौ यदि पृच्छकः पृच्छति तदा नीरोगो जीवति। आशाबहिर्वादशाङ्गुलाद्बहिर्गते वायौ यदि पृच्छति तदा तेनैव रोगेण यमालयं

आरभ्य दर्शप्रथमामुदेति वामे पुटे त्रीणि दिनानि देवः।
वामेतरे त्रीणि ततो दिनानि पूर्णां तिथिं यावदशेषमेव ॥ १८॥

अथारभ्य शुक्लान्यपक्षादिभूताम्
तिथिं त्रीणि देवो दिनान्यभ्युदेति।
पुटे दक्षिणे त्रीणि वामे तु यावत्
कुहूरेवमेवं समालक्षयेत्ता ॥ १९ ॥

एकस्य पक्षस्य विपर्य्ययेण
रोगाभिभूतिर्भवतीह पुंसाम्।
तयोर्द्वयोर्बन्धुसुहृद्विपत्तिः
पक्षत्रये व्यत्ययतो मृतिः स्यात् ॥ ॥ २० ॥

---

रोगी यातीति। कार्य्यान्तरे तत् प्रयोजनं कथयति। यदीश्वरे वायौ अन्तर्गते अत्र कार्य्ये आकाङ्क्षितसिद्धिर्भवति बहिर्गते द्वादशाङ्गुलादधिकं गते सर्वकार्य्याणि नश्यन्तीति। कति दिनानि कुत्र तिष्ठतीति कथयति ॥ १६। १७ ॥

आरभ्येति। दर्श एव प्रथमा तिथिर्यस्याः प्रतिपदः सा दर्शप्रथमा प्रतिपत् तेन शुक्लप्रतिपदादितिथित्रये वामे चतुर्थ्यादि दक्षिणे सप्तम्यादि वामे दशम्यादि दक्षिणे त्रयोदश्यादि वामे कृष्णप्रतिपदादि दक्षिणे चतुर्थ्यादि वामे सप्तम्यादि दक्षिणे दशम्यादि वामे त्रयोदश्यादि दक्षिणे। अथेत्यनन्तरं शुक्लान्यपक्षादिभूतां कृष्णप्रतिपत्तिथिमुपक्रम्य त्रीणि दिनानि दक्षिणभागे वायुरुदेतीत्यादिसंख्या उक्ता एवं ना पुरुष उदरं लक्षयेत् ॥ १८। १९ ॥

एकस्येति। यद्येकत्र पक्षे वायोर्वैपरीत्यं भवति तदा तस्य पुरुषस्य रोगजनितोऽभिभवो भवति। शुक्लप्रतिपदादिदिनत्रयं यावद्वायुर्वामपुटे सञ्चरति तत्र यदि दक्षिणपुटे भवति एवं पञ्चदशदिनपर्य्यन्तं यदि व्यत्ययो भवति तदा रोगाभिभूतिर्भवति मासमात्रं वैपरीत्येन सुहृदां विपत्तिः पञ्चचत्वारिंशद्दिनानि यावद्व्यत्ययो तस्य पुरुषस्य मरणं भवतीति। वायोर्वैपरीत्ये रोगादिकं भवतीति स्वाभाविकी गतिः ॥ २० ॥

यदात्मनः कालवशात् समीरणो
विपर्य्ययेदेति प्रकृतिं विहाय सः ।
तदा निरुध्य श्वसनं निपीड़येद्
यथा स्थितं पद्ममुपैति चात्मनः ॥ २१ ॥

द्वावेव धत्तः सकलश्च कालं दिवाकरः कैरवबान्धवश्च ।
भोक्त्री सुषुम्ना सकलस्य चास्य कालस्य दोषादिवसात्मकस्य ॥२२

ततः क्रमेणैव विशुद्धनाड़ीपथान्तरः प्राणसमीरणस्य ।
शनैः शनैः संयमने प्रयत्नं यथाविधानं विदधीत धीरः ॥ २३ ॥

शीतांशुमार्गेण शनैः समीरमापूरयेत् स्वोदरमादरेण ।
विकारमात्राभिरपेततन्द्रः कालाग्निमूलार्पितचित्तवृत्तिः ॥२४॥

ततो धारयेन्मारुतं शुद्धचेताश्चतुःषष्टिमात्राः समापूरितं तम् ।
वह्निर्भास्वता रेचयेन्मन्दमेनं तदर्द्धाभिरन्तर्निरुद्धं तु ताभिः ॥२५॥

---

विपरीतोदये शुभोदयः कथं स्यादित्याह यदेति। स्वकीयादृष्टवशाद्वायुर्वैपरीत्यं उदेति तदादिबोधं कृत्वा श्वासं पीड़येत् यथा पुटान्तरं गच्छति ॥ २१ ॥

द्वावेवेति। कुमुदबन्धुश्चन्द्रः सूर्य्यश्चासौ सकलं कालं धत्तः दिवारात्रिरसात्मकस्य रात्रिन्दिवोपलक्षितस्य कालस्य भोक्त्री भक्षिका सुषुम्ना परं नान्या नाड़ीभोक्तृत्वं नाम चित्कलासमवेतस्य तस्योपाधितया रूपत्वमापाद्य सर्वस्वाभिभावकत्वमित्यर्थः ॥ २२ ॥

तत इति। सुषुम्नैव भोक्त्री तदा क्रमेण विशोधितनाड़ीमार्गान्तरः सन् प्राणवायोः शनैः शनैः संयमने नियमे प्रयत्नं यथा कथितप्रकारेण कुर्वीत ॥ २३ ॥

तमेव प्रकारं कथयति शीतांशुमार्गे इति। शीतांशोश्चन्द्रस्य वर्त्मना वामनाड्या वायुभिः स्वकीयमुदरं विकारमात्रया षोड़शमात्रया पूरयेत्। अपेता तन्द्रा निद्रा यस्य सः कालाग्निमूलाग्निमूलार्पितचित्तवृत्तिः। कालाग्निमूले मूलाधारेऽर्पिता चित्तवृत्तिर्व्यापारो येन ॥ २४ ॥

तत इति। पूरितं वायुं चतुःषष्टिमात्रापर्य्यन्तं धारयेत् तस्य गतागतं विरोधयेत् भास्वता सूर्य्यमार्गेण दक्षिणया शनैस्तदर्द्धाभिर्द्वात्रिंशन्मात्राभिरभ्यन्तरे निरुद्धं तं वायुं रेचयेत् त्यजेत् ॥ २५ ॥

विपरीतमतो विदधीत बुधः पुनरप्यथ तद्विपरीतमिति ।
असुना विधिना सुमनाः सततं मरुतो विदधीत सुसंयमनम्॥२६॥
प्रस्वेदं जनयति यः प्राणायामेषु सोऽधमः प्रोक्तः ।
कम्पोमध्यः पुंसां भूमित्यागं तनोस्तनोति परः ॥ २७ ॥
तावद्विदधीत बुधः प्राणायामं समाहितो विधिवत् ।
यावत् सम्भवति भुवि प्राणायामस्योत्तमस्य गुणः ॥ २८ ॥

अयं प्राणायामः सकलदुरितध्वंसनकरो
विगर्भः प्रोक्तोऽसौ शतगुणफलो गर्भकलितः ।
जपध्यानापेतः स तु निगदितो गर्भरहितः
स गर्भस्तूभ्मुक्तो मुनिपरिवृतैर्योगनिरतैः ॥ २९ ॥
शुचिः प्राणायामान् प्रणवसहितान् षोड़श वशी
प्रभाते सायञ्च प्रतिदिवसमेवं वितनुते ।
द्विजो यस्तं भ्रूणप्रहरणकृतांवोऽभिकलितम्
पुनन्त्येते माजादिह दुरिततूलौघदहनाः ॥ ३० ॥

त्रायन्त्यमी षड्भिरपीह मासैर्जन्मान्तरोपार्जितपापपुञ्जात् ।
संवत्सराद्ब्रह्मपदं तदेकं प्रकाशयन्त्येव यदच्युताख्यम् ॥ ३१ ॥
इह रेचकपूरकौ विहाय स्थिरधीः कुम्भकमेव केवलं यः ।
सततं कुरुते मनोजवत्वं लभते वीतजरामयः स मर्त्यः ॥३२॥

---

विपरीतमिति । अतः प्रकृताद्विपरीतं विदधीत कुर्य्यात् । पुनरपि तद्विपरीतं प्रकृतक्रमेणादिकं पुनरपि तद्विपरीतम् एवमभ्यसेत् असुना प्रकारेण मरुतो वायोर्नियमं न कुर्य्यात् ॥ २६ ॥

प्रस्वेदमिति । अयं सुगमः ॥ २७ ॥ २८ ॥

अयमिति । गर्भो गर्भशून्यः प्राणायाम उक्तः सन् सकलदुरितानि विनाशयति गर्भेण सहितोऽयं शतगुणफलसहितः कथितः विगर्भापेक्षया को विगर्भः कः सगर्भः इत्याकाङ्क्षायामाह जपेति । जपैर्ध्यानैश्च शून्यो यः गर्भरहितः ताभ्यां युक्तो यः सगर्भः कथितः ॥ २९ ॥

न हि तस्य सुदुर्लभं त्रिलोक्या-
मिह यः केवलं कुम्भके निषण्णः।
अणिमादिगुणाष्टकं करस्थम्
ननु तस्यैव निरस्तमृत्युभीतेः ॥ ३३ ॥

राजदन्तयुगलादिमस्पृशन् सन्निधाय्य रसनां तदन्तिके।
काकचञ्चुपुटमारुतं पिबेत् प्राणसंयमनमेतदुत्तमम् ॥ ३४ ॥
द्विकचञ्चुसमीरणं शनैर्धयतः सम्परिक्षत्य सन्ध्ययोः।
श्रमदाहगरोदरामयज्वरगुल्माः प्रशमं प्रयान्ति च ॥ ३५ ॥
उभयोरपि सन्ध्ययो मुहूर्त्तं पिकधातु र्धयतस्त्रिमासमात्रम्।
सरसं द्विकचञ्चुगन्धवाहं भुवि सारस्वतसिद्धिरुत्तमा स्यात् ॥३६॥
विषमुग्रमुदग्रवीर्य्यभाजां प्रविनाशं समुपैति पन्नगानाम्।
किमु वृश्चिककीटलूतकानामिह काकोलमुखानिलस्य पानात्
॥ ३७ ॥
द्विकचञ्चुसमीरणं नरः सरसं यः परिकृष्य सन्ध्ययोः।
कुरुते निजकुण्डलीमुखे क्षयरोगं स विमुच्य जीवति ॥ ३८ ॥
द्विकचञ्चुसमीरणं नरो यः पिबतीहानिशमेव वीततन्द्रः।

---

शुचिरित्यादि। चतुष्टयं सुगमम् ॥ ३०—३३ ॥

राजदन्तेति। राजदन्तयुगलद्वयस्यादिमस्पृशन् तेषाम् अन्तिके समीपे जिह्वां सन्निधाय्य काकचञ्चुपुटेन वायुं पिबेत्। काकचञ्चुपुटवन्मुखं कृत्वा पिबेदित्यर्थः। मध्यभूतदन्तचतुष्टयं राजदन्ताः एतदुत्कृष्टं वायोर्नियमनमिति ॥ ३४ ॥

द्विकेति। द्विकचञ्चुभ्यां समीरणं वायुं धयतः पिबतः धेट् पा पाने। द्वाभ्यां ककाराभ्यां वर्त्तते द्विकः काकः श्रमदाहं गरोविषम् उदरामयम् उदररोगः ज्वरः गुल्म इत्याद्याः प्रशमं प्रयान्ति ॥ ३५ ॥

उभयोरिति। उभयोः प्रातः सायं सन्ध्ययोर्मुहूर्त्तं दण्डद्वयं यावत् प्रहरत्रयमात्रं वा त्रं मासम्, तस्य धातुः धर्त्तुः पुंसः काकचञ्चुपुटमारुतं पिबतः सारस्वतसिद्धिर्भवति सन्ध्यामुहूर्त्तमात्रं प्रहरत्रयं वेति व्यवस्थितविकल्पार्थः ॥ ३६ ॥

भवति ध्रुवमिव तस्य वर्षाच्छ्रवणं दर्शनमप्यतीव दूरात् ॥३९॥
बहुधा कथितैर्मुहुः किमेभिर्द्विकचञ्चा तु समीरणस्य पानात् ।
जरसा सह नाशमाशु याति प्रबलं मृत्युकृतं भयं नराणाम् ॥४०॥
जिह्वां कृत्वाऽनाकुलस्तालुमूले दन्तैर्दन्तान् गाढ़मापीड़यित्वा ।
मन्दं मन्दं यः पिबेद्गन्धवाहं सौधैः पूरैः साकमन्तः स्रुशद्भिः ॥४१॥
षण्मासाभ्यासेन रोगैरशेषैः पापेभ्योऽसौ मुच्यते साधकेन्द्रः ।
अब्दादेकाद्विश्रसां मृत्युदूतीं जित्वा भूमौ दीर्घकालं स जीवेत्
॥ ४२ ॥
वर्षत्रयाभ्यासवशादतीतमनागतं वेत्त्यलिनीलकेशः ।
विषं न देहे क्रमते तदीये दष्टे सुघोरैरपि पन्नगेन्द्रैः ॥ ४३ ॥
न कृत्रिमं स्थावरजङ्गमं वा विषं किमन्यैरपि कालकूटैः ।
गुणाष्टकं कालवशादुपेत्य महीतले क्रीड़ति भैरवो वा ॥ ४४ ॥
या मुण्डाधारदण्डान्तरविवरगताहारनीहारगौरी
सौधीं धारां नभोऽम्भोरुहकुहरविधोः संस्रवन्तीं वहन्ती ।
तस्या वज्राख्यनाड्याः खगमुदरदरीमध्यगं यो विदध्यात्
तस्या ब्रह्माण्डभाण्डप्रलयमपघनं स्याद्घनं मृत्युमृत्योः ॥४५॥

---

विषमिति । काकोलः सर्वं सुगमम् ॥ ३७—४० ॥

जिह्वामिति । तालुप्रदेशे जिह्वां योजयित्वा उपरिस्थदन्तपङ्क्त्याऽधोदन्तावलिं आपीड्य सौधैः पूर्वमुखावस्थितैः सह गन्धवाहं वायुं पिबेत् अन्यत् सुगमम् । प्रकारान्तरमाह जिह्वामिति । सौधैर्मुखान्तर्गतरसैः विस्रसां जरां कृत्रिमविषं नारिकेलमिश्रितकर्पूरं स्थावरं हिमशैलजादिकं जङ्गमं पार्वतीयं व्याघ्रनाभिजन्यं गुणाष्टकम् अष्टसिद्धिर्भैरवावतारार्थे वाशब्दः ॥ ४१—४४ ॥

या मुण्डेति । सुषुम्नान्तर्गताया वज्राख्यनाड्या उदरमेव दरी कन्दरा तन्मध्यवर्त्तिनं खगं वायुं यो विधानं करोति तस्य पवनं शरीरं मृत्युमृत्योर्घनं सुदृढं भवति । मृत्युर्यमः तस्य मृत्युर्नाशकः तस्य तीव्रमृत्युकरो भवति । घनः स्याद्दृढ़-

मूर्च्छां गतो हरति रोगसमूहमध्या-
रुद्धः करोति गगने गमनं नराणाम्।
वातो मृतो वितनुतेऽमरतां समस्त-
मभ्यासतः सुलभमेव समीरणस्य ॥ ४६ ॥

अथ पार्ष्णिनिरुद्धकम्बुर्ना ध्वजमूलस्थितसव्यपादपार्ष्णिः।
ऋजुकायशिरोधरो यतात्मा विषयेभ्यो विनिवर्त्तितेन्द्रियाश्वः॥४७

काकोचञ्चूग्रहृष्टैर्मुहुरुदरदरीं पूरयित्वा समीरै-
रङ्गुष्ठाभ्यामुभाभ्यां नररिपुविवरे तर्जनीभ्यां च नेत्रे।
नासारन्ध्रं निरुध्य स्थिरविमलमतिर्मध्यमाभ्यामथास्य-
मन्याभि र्नातिगाढं कमलजनिलये स्थापयेन्मानसं स्वम् ॥४८॥

---

मुन्नर इत्यमरः। सा का मुण्डाधारदण्डान्तरविवरगर्त्ता मुण्डस्याधारभूतो दण्डः पृष्ठवंशात्मकः तदन्तर्गतसुषुम्ना तन्मध्यवर्त्तिनमित्यर्थः। कीदृशाहवे हिमवच्छुभ्रा-मृतधारां वहन्ती धारयन्ती आकाशदेशावस्थितपद्माभ्यन्तरवर्त्तिनोविधोश्चन्द्रस्य चरन्तीम् तथाच यः सुषुम्नान्तर्गतवायुं निरोधयति तस्य मरणं न भवतीत्यर्थः ॥४५॥

मूर्च्छामिति। मूर्च्छा निश्चेष्टत्वे सति इति यावत्। अद्धा तत्त्वेन रोगसङ्घातं निवारयति। बद्धः सन् नाड्यन्तरे निरुद्धः आयत्तः सन् मनुष्याणाम् आकाशगमनं निराधारसञ्चारं करोति मृतः मनसा सह याति स्वाभीष्टदेशं तथा विलीनः अमरताम् अमरणं नयति। तथाच मूर्च्छितो हरति व्याधिं निहन्यान्मरणं मृतः। बद्धः खेचरतां कुर्यात् वशी वायुश्च भैरवि ! ॥ ४६ ॥

प्रकारान्तरमाह तथेति। ना पुरुषः स्वीयमानसं कमलजन्मनो ब्रह्मणो निलये आधारकमलेऽवस्थापयेत्। कीदृक्पार्ष्णिना एकपादगुल्फेन निरुद्धः कम्बुनिरुद्ध-गुदमार्गो येन सः ध्वजमूले लिङ्गमूलेऽवस्थापिता अपरपादपार्ष्णिर्येन सः। ऋजु-कायः अवक्रशरीरः यतात्मा इन्द्रियमेव दुर्द्धरत्वादश्व इवाश्वः ॥ ४७ ॥

काकीति। काकचञ्चुमुखेनाकृष्टैर्वायुभिरुदरदरीं पूरयित्वा करद्वयस्याङ्गु-ष्ठाभ्यां नररिपुविवरे वक्ष्यमाणे नरो अर्जुनः तस्य रिपुः कर्णः कर्णविवर इत्यर्थः। तर्जनीद्वयेन नेत्रद्वयं मध्यमाभ्याम् अङ्गुलीभ्यां नासापुटं निरुध्य अन्याभिश्चतुर्भिर्मुखं निरुध्य ॥ ४८ ॥

यथाशक्त्याभ्यासं प्रतिदिवसमेवं विदधतः
सुषुम्नान्तस्थायं प्रचरति शनैर्देहपवनः।
तदा नादो नैजो भवति सहसानन्दजननः
क्रमाद्वीणावादिप्रहतमृदुवीणारवमयः॥ ४९॥

आदौ मत्तालिमालागलपथविगलत्तारझङ्कारहारी
नादोऽसौ वंशिकांस्यानिलभरितलसद्वंशनिस्वानतुल्यः।
घण्टानादानुकारी तदनु जलनिधिध्वानधीरो गभीरो
गर्जं पर्जन्यघोषः पर इह कुहरे वर्त्तते ब्रह्मनाड्याः॥५०॥

विजिते भवतीह तेन वायुः सहजो यस्य समुत्थितप्रणादः।
अणिमादिगुणा भवन्ति तस्यामितपुण्यस्य महासुखास्पदस्य॥५१॥

सुरराजतनुजवैरिरन्ध्रे विनिरुध्य स्वकराङ्गुलोदयेन।
जलधेरिव धीरनादमन्तः प्रसवन्तं सहसा शृणोति मर्त्यः॥५२॥

परिभावयतोऽपि नादमेनं त्रिदशाधीशतनूजवैरिजातम्।
सततं भवतीह तस्य जन्तोर्गुणसम्पत्तिरपेतकल्मषस्य॥५३॥

शृङ्गाण्यङ्गुलिभिर्निरुध्य विधिवत् कोदण्डयोः पण्डितो
मध्ये बद्धमरुन्निरुध्य वृषभश्रेष्ठञ्च षष्ठेन्द्रियम्।

---

यथेति। एवमनेन कथितप्रकारेण प्रतिदिनमभ्यसतः पुंसः सुषुम्नाभ्यन्तरे अयं वायुः सञ्चरति यदि तदा सततानन्दजनको ब्रह्मप्रदो नाद उत्पद्यते क्रमेण पुनर्वीणासमरवो भवति वीणावादिप्रक्कतलो नातिशयमधुरध्वनिरिति। इयं सुगमम्॥४९—५१॥

सुरराजेति। सुरराज इन्द्रः तत्तनुजोऽर्जुनः तद्वैरी कर्णः तत्र स्वहस्तद्वयाङ्गुलिद्वयेन निरुध्य समुद्रस्येव गभीरं शब्दमभ्यन्तरे प्रसरन्तं शृणोति मर्त्यः तस्यापगतपाप्मनः गुणावाप्तिर्भवति मोक्षप्राप्तिर्भवतीत्यर्थः॥ ५२। ५३॥

शृङ्गाणीति। शृङ्गाणीन्द्रियाणि तान्यङ्गुलीभिः प्रतिरुध्य कोदण्डयोर्भ्रुवोर्मध्ये निरुद्धपवनः वृषभश्रेष्ठः। वृषो विषयः तं भजत इति वृषभः वृषभाणीन्द्रियाणि तच्छ्रेष्ठं षष्ठेन्द्रियं मनः तन्निरुध्य इत्यर्थः। कथ्यन्तगीतं वेदान्तवेद्यं अहमुक्तशशभृत्-

साक्षात्तत्क्षणमेव पश्यति शनैस्त्र्यन्तगीतं परम्
ज्योतिस्त्रैपुरमङ्गमुत्तमशशभ्रन्नक्षाभलक्षप्रभम् ॥ ५४ ॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
तृतीयः पटलः ।

---

## चतुर्थः पटलः ।

अथ पूरकयोगयोजितान्तः पृषदश्वो निजमूलचक्रदेशे ।
विदधीत बुधः समाहितोऽजोपपदग्रन्थिविभेदने प्रयत्नम् ॥१॥
शक्रात् समुत्सृज्य यथा शनैः स्वं सङ्कोचयेत् कम्बुनि मार्गमर्वा ।
बुधस्तथाधारनियोजितात्मा सङ्कोचयेत् कम्बुनि मार्गमुच्चैः ॥२॥

---

क्षाभलक्षप्रभम् एककालोदितनिष्कलङ्कानेकचन्द्रप्रभम् । अयमर्थः । इन्द्रियाणि स्वकराङ्गुलीभिर्निरुध्य भ्रुवोर्मध्ये स्वान्तसम्भिन्नवायुं स्वप्रभावक्रमेण यो नियमयति स शशिप्रभं वेदान्तवेद्यं परं ज्योतिःस्वरूपमात्मानम् अनुभवतीत्यर्थः ॥ ५४ ॥

इति त्रिपुरासारटीकायां पदार्थादर्शे तृतीयः पटलः ।

---

एवं प्राणायामेन पवनजययोगविशेषांश्चोक्त्वा जितासरतामविकाराणामभ्युदय-निःश्रेयसप्राप्त्युपायभूतं मन्त्राणां छिन्नादिदोषपरिहारार्थं योनिमुद्राबन्धनप्रकारं वक्तुमुपक्रमते अथ पूरकयोग इत्यादिना । आदौ पूरकादियोगाभ्यासेन निजमूल-चक्रदेशे मनः संयोज्य अजोपपदग्रन्थिविभेदने यत्नं प्रकुर्वीत अजो ब्रह्मा स एव उप-पत्तिर्यस्य ग्रन्थिशब्दस्य तेन ब्रह्मग्रन्थिरित्यर्थः । समाहिताभ्यासध्यानः ॥ १ ॥

ग्रन्थिभेदप्रकारमाह शक्रादिति । अर्वा अश्वः शक्रविष्ठां समुत्सृज्य त्यक्त्वा येन प्रकारेण कम्बुनि मार्गं गुदमार्गं सङ्कोचयेत् तेन प्रकारेणाधारचक्रे संयुक्तात्मा पुरुषः । स्वीयं कम्बुनि मार्गं सङ्कोचं नयेत् ॥ २ ॥

विदधीत मुहुर्मुहुर्गुरूक्तक्रमतो हुङ्कृतिमङ्कलग्नपाणिः।
दृढरुद्धगुदध्वजान्तरालस्थिततेजोमयपुष्करान्यवोनिः ॥ ३ ॥
अथ कम्बुनि मारुतं जितात्मा प्रतिलोमेन शनैः प्रवेशयेत्तम्।
कमलासनपङ्कजस्य मूलं स्वगुरुप्रोक्तविधानतो दुरापम् ॥ ४ ॥
अमुना विधिना मुहुः कृतेन क्रमशः कम्बुनि मारुतस्ततोऽसौ।
अजपङ्कजमूलदेशमार्गप्रणयी ग्रन्थिविभेदनं करोति ॥ ५ ॥
परिहृत्य खगाधिपस्ततोऽसौ सरणिं चन्द्रमसो नभोमणेः।
कमलं कमलासनस्य पश्चाद्विदधीतोर्द्ध्वमुखं प्रविश्य सम्यक् ॥ ६ ॥
प्रतिभानमथाद्भुतं प्रविष्टे भवनान्तः परमेष्ठिनः खगेशे।
लघुता वपुषो भवत्युदग्रा जठरान्तर्ज्वलनस्य चापि दीप्तिः ॥७॥
तड़िल्कोटिप्रख्यं सुरुचिजितकालानलरुचिम्
सहस्रादित्यांशुप्रकरसदृशोद्योतकलितम्।

---

विदधीतेति। मुहुर्मुहु र्वारंवारं गुरूपदिष्टप्रकारेण करकमलद्वयं नाभेरधः-स्थिततेजोमयपद्माग्रस्य योनिश्च यत्नेन निरुध्य गुदलिङ्गमध्यतेजोमयपुष्कराग्रे योनिर्येन निरुद्धमूलाधार इत्यर्थः। अयमर्थः गुदध्वजयोर्मध्ये स्थितं यच्चतुष्पत्रं पद्मं तन्मध्ये त्रिकोणाकारा योनिरिति ॥ ३ ॥

अथेति। कम्बुनि मारुतमपानवायुं देशिकोक्तक्रमेणाकुञ्च्य शनैरूर्द्ध्वं नीत्वा कमलासनपङ्कजाख्यं सुषुम्नामूलं प्रवेशयेत् ॥ ४ ॥

अमुना विधिनेति। एवं मुहुर्मुहुरभ्यासेन अधोवृत्तं निरुध्य तदन्तर्ब्रह्ममार्ग-स्थितग्रन्थिभेदनं करोतीत्यर्थः ॥ ५ ॥

परिहृत्येति। अपानश्च ऊर्द्ध्ववर्त्तित्वेन प्राणात्मकत्वात् खगाधिपत्वाख्यां लभते। एवमूर्द्ध्वगमनाय प्रवृत्तोऽपानवायुः सोमसूर्यात्मकेड़ापिङ्गलामार्गौ परिहृत्य कमलमूलं सुषुम्नामूलम् उपविश्य ऊर्द्ध्वमुखं करोति ॥ ६ ॥

प्रतिभानमिति। खगेशेऽपानवायौ ब्रह्मणो भवनाभ्यन्तरं प्रविष्टे सति [अद्भुतम्] आश्चर्य्यजनकं प्रतिभानं भवति वपुषः उदग्रा लघुता भवति ॥ ७ ॥

तड़िल्कोटिप्रख्यमिति। कामशरीराग्निं ध्यायेत्। कीदृशं विद्युदयुतुल्यम्। स्वतेजसा विजिता कालानलस्य रुचिर्येन तादृशं सहस्रसंख्यादित्यतेजःसमूहतुल्येन

भ्रमन्तं योन्यन्तः स्फुरदरुणबन्धूककुसुम-
प्रभं कामं ध्यायेज्जठरशशभृत्कोटिशिखरम् ॥ ८ ॥

तस्योर्द्ध्वेऽग्निशिखा चिरद्युतिलतापुञ्जप्रभाभास्वरा
सूक्ष्मा ब्रह्मपथान्तराम्बरगता चैतन्यमात्रा कला ।
एकीभूतमनन्तरं सह तया ध्यायेद्धिया निश्चलम्
आत्मानञ्च निवातदीपनिभया हंसस्वरूपं बुधः ॥ ९ ॥

शक्तिः कुण्डलिनीति या निगदिता आद्यैमसंज्ञा जग-
न्निर्माणे सततोद्यता प्रविलसत्सौदामिनीसन्निभा ।
शङ्खावर्त्तनिभां प्रसुप्तभुजगाकारां जगन्मोहिनीम्
तन्मध्ये परिभावयेद्विषलतातन्तूपमेयाकृतिम् ॥ १० ॥

हुङ्कारेण गुरूपदिष्टविधिना प्रोत्थाप्य सुप्तां ततः
कृत्वा तां कलया तया परमया चिद्रूपया सङ्गताम् ।
मायां कुण्डलिनीं समाहितमनास्तामुच्चरेत् कौशिकीम्
शक्तिं ब्रह्ममहापथेन सहितामाधारतः स्वात्मना ॥ ११ ॥

---

उद्योतेन कल्पितं सत्वद्ध योन्यन्तराधारचक्रस्याभ्यन्तरे भासमानं बन्धूकशब्देन रक्त-वर्णाभं शशभृल्लच्चशिशिरम्। एतेन साधकानामानन्दजनकत्वं बोध्यते। काममिति कामशब्दोरहस्यागमे शरीरवैश्वानरे रूढः। एवं तेजोमयं कामं स्वाधारगमन भाव-येत्। तथाचोक्तं रुद्रयामले—भ्रमं योनिगतं ध्यायेत् कामं बन्धूकसन्निभम्। ज्वलत्कालानलप्रख्यं तडित्कोटिसमप्रभम् इति ॥ ८ ॥

तस्येति। तस्य कामराजाख्यजातवेदस उपरि शिखारूपातिसूक्ष्मा विद्युत्सहस्र-सन्निभा चिद्रूपा या कला सा ब्रह्मेति। केचित्तु विद्युत्सहस्रसन्निभा चिद्रूपात्म-कला निष्कला ध्येया इत्यनुषज्यते। परमहंसस्वरूपात्मानं तया कलया एकीभूत्य चिन्तयेदिति ॥ ९ ॥

शक्तिरिति। तया कलया या चिद्रूपा कला कुण्डलिनीशक्तिरिति कथिता पूर्वोक्तशिखामध्यगां परिभावयेत्। अन्तर्व्याप्य स्थितां ध्यायेदित्यर्थः ॥ १० ॥

उक्तमर्थं संक्षिप्य दर्शयति हुङ्कारेति। हुङ्कारेण मन्त्रसहितेन गुरूक्तप्रका-

भित्त्वा लिङ्गत्रयमथ बुधो ब्रह्मनाड्येह चोर्द्ध्वम्
गच्छन्तीं तां कमलजपदात् प्रापयेदात्मशक्तिम्।
व्योमाम्भोजप्रणयिपरमानन्दकन्दं विसर्ग-
स्थानं चन्द्रोपरि परिगलद्रक्तपीयूषधारम् ॥ १२ ॥

पीत्वा कुलामृतरसं पुनरेव दिव्यम्
मध्यं विशेदपथनस्य समाहितात्मा।
यायात् कुलादकुलमेव पुनश्च मात्रा-
योगेन देशिकवरप्रतिपादितेन ॥ १३ ॥

सा शक्तिः सकलशरीरजीवभूता
प्राणोऽसाविति गदितात्र तन्त्रिमुख्यैः।
उद्घातः स तु परिपठ्यते मुनीन्द्रैः
प्राणोऽन्तः स्पृशति यदा क्रमेण नीतः ॥ १४ ॥

अमुं स्वाधारस्थं प्रतिदिवसमभ्यासनिरतः
करोति श्रद्धावान् सततमयधूताखिलमलः।
स मुक्तो दुःखौघैरपगतजराक्लेशमरणो
गुणग्रामोपेतः सुर इव चिरं जीवति भुवि ॥ १५ ॥

---

रेण तां कुण्डलिनीं आधारकमले सुप्तामुत्थाप्य प्रबोध्य अनन्तरं तया परमया चैतन्यरूपया मिलितां कुण्डलिनीं मायां कुलं मूलाधारः तत्रस्थां शरीरस्य देवतां चिन्तयेत्। अकुल शिव इत्युक्तः कुलं शक्तिः प्रकीर्त्तिता। कौलं तेजो विकारः स्यादिति त्रितयनिर्णय इति ॥ ११ ॥

भित्त्वेति। अथ कथितं लिङ्गत्रयं विभिद्य ब्रह्मनाड्या सुषुम्नया ब्रह्मणः स्थाना-दूर्द्ध्वं तां कुण्डलिनीं शक्तिम् आकाशाम्भोरुहप्रणयित्वम् आकाशाम्भोजस्थपरमा-नन्दस्थविसर्गस्थानं प्रापयेत् ध्यायेत् ॥ १२ ॥

पीत्वा कुलामृतरसमिति। एवं तां सहस्रारपर्य्यन्तं नीत्वा तत्रस्थं दिव्यं सुधारसं पीत्वा तेनैव मार्गेण विरोहक्रमेण अपथनस्य मध्यं कुलाख्यं योन्याधारं प्रापयेत् शरीरमध्यं मूलाधारमित्यर्थः। कथं ग्राहयेदित्याह मात्रायोगेन गुरुक्रमाभावोग-

चतुर्विधा या कथितेह सृष्टिः प्रवर्त्तते सा सकलापि यस्याम् ।
प्रलीयते चापि जगत् समस्तं कालाग्निरुद्रादिशिवान्तमेतत् ॥ १६ ॥

सेयं मयोक्ता खलु योनिमुद्रा बन्धस्तु देवैरपि दुर्लभः स्यात् ।
अनेन बन्धेन न साध्यते यन्नास्त्येव तत् साधकपुङ्गवस्य ॥ १७ ॥

छिन्ना रुद्धाः स्तम्भिताः कीलिता ये
सुप्ता मत्ता मूर्च्छिता हीनवीर्य्याः ।
दग्धाः त्रस्ताः शत्रुपक्षस्थिता ये
बाला वृद्धा गर्विता यौवनेन ॥ १८ ॥

ये निर्जीवा ये च सत्त्वेन हीनाः षण्डीभूताश्चाङ्गमन्त्रैर्विहीनाः ।
एते मुद्राबन्धनेनापि येऽन्ये मन्त्राः सर्वे वीर्य्यवन्तो भवन्ति ॥ १९ ॥

---

क्रमेण गतागतं विदधीत । मात्रा तु—विन्दुनादस्तथा शक्तिर्मात्रात्रयमुदाहृतमिति । तथा हि मात्रापदेन पीठत्रयं विधीयते । आज्ञास्थानगतो विन्दुः तत्त्वात्मा प्रकाशकस्वरूपं पूर्णाख्यं पीठं तदुपरि ललाटमध्ये विन्द्वात्मकप्रकाशरूपस्य शिवात्मकस्फुरद्रूपनादात्मकस्य नादाख्यं द्वितीयं पीठं तदुपरि शिखा विश्वात्मिका शक्तिरूपं मया उक्ता खलु निश्चये अस्या मुद्राया बन्धनं देवैरपि दुर्लभञ्च । योनिमुद्राया अनेन बन्धनप्रकारेण यन्न साध्यते तदा स्मरणम् तथा सर्वमेवानया मुद्रया साध्यत इत्यर्थः । इयं का इह जगति या चतुःप्रकारा सृष्टिरुक्ता यस्यां प्रवर्त्तने यतो भवतीत्यर्थः । उद्भिदस्तरुगुल्माद्याः स्वेदजाः कृमिदंशाद्याः जरायुजा मनुष्याद्याः अण्डजाः पक्षिसर्पादयः । केचित्तु शब्दसृष्टिः शब्दार्थसृष्टिः प्रकृतिपुरुषसृष्टिरिति मन्यन्ते । अथवा नैयायिकमते पुरुषसृष्टिः सांख्यमते प्रकृतिपुरुषयोगात् पातञ्जलमते केवलप्रकृतेः मीमांसकमतेऽदृष्टादिति । चतुर्विधा सृष्टिः समस्तं जगदपि यस्यां कालाग्निरुद्रादिरूपां यस्यामेव लयं याति पूर्वोक्तध्यानविशेष एव मुद्रा ॥ १३—१७ ॥

छिन्नेति । युग्मकम् । एते सर्वे मन्त्रा योनिमुद्राया ध्यानविशेषेण वीर्य्ययुक्ता भवन्ति । एतैरुच्छिन्ना मनोर्यस्यादिमध्यान्ते स्वामिनं वीजमुच्यते । संयुक्तं वाग्वियुक्तं वायुनाक्रान्तं त्रिधा पुनः । चतुर्धा पञ्चधा वाथ स मन्त्रश्छिन्नसंज्ञकः । आदिमध्यावसानेषु भूवीजद्वन्द्वलाञ्छितः । रुद्धमन्त्रः स विज्ञेयो भुक्तिमुक्तिविवर्जितः । ये च

गुरुतल्पनिषेवणञ्च पानं द्विजहत्या मधुनः सुवर्णचौर्य्यम्।
अमुना विलयं प्रयान्ति सम्यक् सकृदप्याचरितेन बन्धनेन ॥२०॥
स तु मन्त्रिवरः स एव योगी गुणसिद्धेः पदमास्थितः स एव।
अमुना चरतीह बन्धनं यः सततं स्वोचितधर्मकर्मनिष्ठः ॥ २१ ॥
अमुना भवतीह देहभाजां सतताभ्यासकृतेन बन्धनेन।
न जरा पितृराजवैजयन्ती न च मृत्युप्रतिपादिता च भीतिः ॥२२

---

कीलिताः-आदिमध्यावसानेषु हंसः प्रासादवाग्भवौ। हकारो विन्दुवान् जीवो वाग्भवश्च चतुष्कलः। माया नमामि च पदं नास्ति यस्य स कीलितः। ये स्तम्भिताः। एकं मध्ये स्वयं मूर्ध्नि यस्मिन्निन्द्रपुरन्दरौ। न विद्यते स मन्त्रः स्यात् स्तम्भितः सिद्धिरोधनः। ये च सुप्ताः। त्रिवर्णो हंसहीनो यः स सुप्तश्च उदाहृतः। ये च मत्ताः। मन्त्रो वाप्यथवा विद्या सप्ताधिकदशाक्षरः। फट्कारः पञ्चकादिर्यो मदोन्मत्त उदीरितः। ये च मूर्च्छिताः। पञ्चधास्त्रं स्थितं मध्ये यस्य मन्त्रः स मूर्च्छितः। ये हीनवीर्य्याः। विरामस्थानगं यस्य हीनवीर्य्यः स कथ्यते। ये च दग्धाः। वह्निर्वायुसमायुक्तो यस्य मन्त्रस्य मूर्द्धनि। सप्तधा दृश्यते तन्तु दग्धं मन्त्री-तमन्त्रवित्। ये च त्रस्ताः। अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टाभिर्दृश्यतेऽक्षरैः। त्रस्तः सोऽभिहितो मन्त्रः। ये च शत्रुपदे स्थिताः। तारादिभिरननुकूलाः। ये च बालाः। सप्तार्णोमनुर्बालः। ये च वृद्धाः। विंशद्वर्णश्च नु.षष्टिवर्णो मन्त्रः शताक्षरः। चतुः-शताक्षरस्यापि वृद्ध इत्यभिधीयते॥ ये च युवानः। षोडशार्णो युवा प्रोक्तः। ये च जीवहीनाः। षष्ठाक्षरो जीवहीनः। ये च सत्त्वहीनाः। द्विवर्णः सत्त्वहीनः स्यात्। ये अङ्गहीनाः। षड्विंशत्यक्षरो मन्त्रः षट्त्रिंशद्वर्णकस्तथा। एकोनविंशद्वर्णो-वाप्यङ्गहीन उदाहृतः। इत्यादिदोषदुष्टा अपि मन्त्रा अनेन ध्यानेन विशुद्धा भवन्ती-त्यर्थः॥ १८॥ १९॥

गुरुतल्पनिषेवणमिति। सकृदाचरितेनापि योनिमुद्राबन्धनेन पुरुषो महापात-कान्मुक्तो भवतीत्यर्थः। अमुना इति। देहिनाम् अमुना योनिमुद्राबन्धनेन सर्वदा कृतेन ध्रुवा भवति। कीदृशी पितृराजस्य यमस्य बन्धनस्य सतताभ्यासात् मनुष्यो-ऽणिमाद्यष्टविधगुणान् प्राप्नोति उत्तमां प्रतिपत्तिं ज्ञानञ्च प्राप्नोति। योगाभ्यासञ्च

एतस्यैव हि बन्धनस्य मनुजः प्राप्नोति शश्वत् कृता-
दभ्यासादणिमादिसिद्धिमतुलां संवित्तिमप्यूर्जिताम्।
योगस्याप्रतिमं जयञ्च मरुतः कालस्य वा वञ्चनम्
तद्विष्णोः परमं पदन्तु सततं पश्यन्ति यत् सूरयः॥ २३॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये
चतुर्थः पटलः॥

---

## पञ्चमः पटलः।

अथाधारपङ्केरुहाण्यत्र वच्ये सुषुम्नान्तरस्थानि संक्षेपतोऽहम्।
तदम्भोजपत्रस्थितांश्चापि देवांस्तदम्भोजवर्णान् षडाधारदेवीः॥१॥
अजग्रन्थिपद्मं पुरा यन्मयोक्तं तदाधारमाद्यं वदन्तीह शम्भुः।
सुवर्णाभवर्णैश्चतुर्भिः समेतं दलैर्योगिगम्यं महाश्चर्यभूतम्॥२॥

---

योगाभ्यासञ्च प्राप्नोति वायौ विजयमाप्नोति कालस्य वा वञ्चनं सकलस्य च प्रेरणम्। वा स्यात् विकल्पोपमयोरेवार्थे च समुच्चये। विष्णोश्च तत्पदं स्थानं पश्यन्ति सूरयः॥ २०—२३॥

इति त्रिपुरासारटीकायां पदार्थदर्शने चतुर्थः पटलः।

---

एवमधिकारिणामभ्युदयनिःश्रेयसप्राप्त्युपायभूतां योनिमुद्रामुक्त्वा अनन्तरं षडा-धारेषु योगविशेषान् वक्तुमुपक्रमते अथाधारपङ्केरुहाणीत्यादि। सुषुम्नान्तरस्थानीति या पूर्वोक्ता सुषुम्नान्तरेऽवस्थिता या चित्रा नाड़ी तदन्तर्मूलाधारादिषट्पर्वाणि सन्ति तान्येव षडाधाराणीत्यर्थः। तेषामम्भोजानां पत्त्रस्थितान् देवान् ब्रह्मादीन् अम्भो-जालीवर्णान् ग्रन्थादीन् अक्षराणि च आधारभूतान् षड्देवांश्च वच्ये इति सम्बन्धः॥१॥

अम्भोजानि कथयति अजेति। योनिमुद्रारचनप्रकारेण यदुक्तं चतुर्दलात्मकं पद्मं तदेवाधारमाद्यं ते योगिनः। देवीनिरुद्धान् जलाद्यञ्चिवर्णान् वशषसान् पूर्वा-दिक्रमेण न्यसेत्। जलेन्द्राग्निवायूनिति पाठे जलं वकारः इन्द्राग्निरिन्द्रद्वितीयं

चतुर्ष्वब्जपत्रेषु देवीनिरुद्धान्
जलाद्यब्धिवर्णान् न्यसेत् केवलान् वा॥
सबिन्दूनमन्दप्रभावान् समिद्ध-
स्फुरज्ज्योतिषो डाकिनी देवतात्र॥ ३॥
मूलाधारे सततं ध्यानयोगात्
स्तम्भक्षोभावुत्प्लुति र्दार्दुरीव।
भूमित्यागः खेचरत्वं क्रमेण
नृणामेते षड्गुणाः सम्भवन्ति॥ ४॥
कान्तिप्रकर्षो वपुषोऽपि नादव्यक्तिः प्रदीप्तिर्जठरानलस्य।
लघुत्वमङ्गस्य निजेन्द्रियाणां पटुत्वमारोग्यमदीनता च॥ ५॥
कृत्वा मनोनिश्चलमूलचक्रमध्ये नराः केवलमादरेण।
भूतं भवच्चापि भविष्यदर्थं वदन्ति शास्त्राण्यपि चा श्रुतानि॥६॥

---

शकारः। एवमग्ने तृतीयं षकारः मध्यवर्णं उक्तः। एवं वायोर्यकारस्य चतुर्थो दन्त्य-सकारः। तेन वं शं षं सं इति वर्णान् प्रथमाद्यं वीजं ततो वकारः तत्र आद्यं वीजं एवं क्रमेण चतुर्दलेषु चत्वारो वर्णा न्यस्तव्या इत्यर्थः। केवलान् वा केवलं विन्दु-युक्तं न्यसेत्। तत्र चतुर्दले डाकिनीरूपा देवी एतत्सकलप्रपञ्चमूलभूतत्वात् मूला-धारमिति योगिनो वदन्ति। अस्मिन् मूलाधारे ध्यानाचरणात् पुंसः स्तम्भक्षोभौ भवतः। निष्क्रियत्वं भवति। उत्प्लुतिः उत्पतनं दार्दुरी दर्दुरी मण्डूकसम्ब-न्धिनी प्लुतिरिति यावत्। भूमित्यागश्च भवति तदनु खेचरत्वं भवति। आकाशेऽपि स्वेच्छाविहारित्वं भवति क्रमेण एते षड्गुणा भवन्ति॥ २—४॥

अन्यान् गुणान् दर्शयति कान्तीति। शरीरस्य कान्तेरुत्कर्षो भवति। नाद-व्यक्तिः नादो ध्वनिविशेषः। जठरानलस्य उद्दीपनः इन्द्रियाणां चक्षुरादीनामक-पटत्वं भवति। योगिनो हि इन्द्रियासन्निकृष्टमप्यर्थं पश्यन्ति। नैरुज्यञ्च भवति दुःखराहित्यञ्च भवति एतत् सर्वं वायोर्धारणाद् भवति॥ ५॥

अन्यदपि प्रयोजनं दर्शयति कृत्वेति। अत्र मूलचक्रमध्ये आधारकमले आद-रेण मनः स्थिरं कृत्वा भूतं वर्त्तमानं भविष्यदपि वदन्ति। अतीतानागतान् वदन्ति। अश्रुतान्यनधीतान्यपि शास्त्राणि वदन्ति व्याख्यान्ति॥ ६॥

विहाय सद्यः कमलासनस्य वक्राम्बुजं प्रीतितरङ्गसङ्गात् ।
तदीयवक्राम्बुरुहोदरान्तः सरस्वती नृत्यति दिव्यरूपिणी ॥७॥
अधिगम्य रसेन्द्रमन्त्रसिद्धौ अपि कालञ्च विजित्य दुर्निवारम् ।
अजरामरतामवाप्य चान्ते परमानन्दपदे मुदा रमन्ते ॥ ८ ॥

एकीभूतार्णवाम्भःप्लुतमखिलजगत् पूर्वमासीदपूर्व-
ज्योतिर्मूर्त्तिस्तदन्तर्महितमहिमभूर्लिङ्गरूपी बभूव ।
षट्सिद्धाधिष्ठितात्मा सकलसुरनुतः षड्भिरास्यैरुपेतः
षड्भिः कोषैश्च देवो भवभयतिमिरध्वंसहंसो महेशः ॥९॥
आद्यं लिङ्गवपुर्भृतो भगवतो देवोहिरण्डोऽभव-
द्वाली पूर्वमुखं शिवस्य तु महाकालस्तदूर्द्ध्वाननम् ।
वक्त्रं दक्षिणमाशुशुक्षणिरसौ देवः पिनाकी पुनः
पाश्चात्यं छगलाण्ड एष भगवान् वामास्यमस्याभवत् ॥१०॥

---

प्रयोजनान्तरमाह विहायेति। कमलासनस्य ब्रह्मणो मुखाम्बुजं प्रीतिरेव तरङ्गस्तत्सम्बन्धात् त्यक्त्वा तदीयवक्राम्बुरुहोदरान्तरे वायुधारणात् कर्त्तुर्मुखाम्भोरुहा-भ्यन्तरे दिव्यरूपा सरस्वती नृत्यति अभिरमति ॥ ७ ॥

प्रयोजनान्तरमाह अधिगम्येति। रसेन्द्रमन्त्रसिद्धौ अधिगम्य दुर्निवारञ्च कालं जित्वा अजरामरतामवाप्य अवसानकाले परमानन्दपदे मोक्षपदे रमन्ते। तस्मात् स्थानसीमात् जीवन्मुक्तो भवति। अवसाने परमात्मनि लीनो भवतीत्यर्थः ॥ ८ ॥

एकीभूतेति। पूर्वमखिलं जगत् एकीभूतं समुद्राम्भःप्लुतमासीत्। तस्या-भ्यन्तरे महेशो देवो लिङ्गरूपी बभूव कीदृशः अपूर्वज्योतिःस्वरूपः अपूर्वतेज एव लिङ्गरूपत्वेन परिणाममगमदित्यर्थः। कीदृशः षड्भिः सिद्धैर्हिरण्डादिभिरधिष्ठि-तात्मा तस्य लिङ्गवपुर्भृतो भगवत आद्यम् ऊर्द्धं मुखं हिरण्डनामा सिद्धपुरुषः आसीत्। पूर्वमुखं वाली नामा ऊर्द्ध्वाननम् अधश्चाननमित्यर्थः। दक्षिणं वायुः पिनाकी पश्चिमास्यं उत्तरं युगलगण्डः तथा आधारात्मा हिरण्डः स्वाधिष्ठानात्मा वाली मणिपूरात्मा महाकालः अनाहतात्मा वह्निः विशुद्धात्मा पिनाकी आज्ञात्मा छगलण्डः। तल्लिङ्गम् एषु स्थानेषु चिन्तनीयम् ॥ ९ । १० ॥

स्वाधिष्ठानसमाह्वयं रसदलैर्मूले ध्वजस्याम्बुजम्
बालादित्यनिभं दलोपरिगतैः पृष्ठादितर्काक्षरैः ।
बिन्दूद्भासितमस्तकैर्भगवतोलिङ्गात्मनः शूलिनः
स्थानं योगिवरेण्यगोचरमिदं चास्याधिपा राकिणी ॥११॥
इह स्वाधिष्ठाने निहितनिजचेतो लयवशा-
दमन्दानन्दौघस्तिमितहृदयः साधकवरः ।
समेताङ्गोऽनङ्गः च्युतितलगतो वा मृगदृशाम्
स्मरस्मेरापाङ्गं रमयति गणं कान्तिकलितम् ॥१२॥
इह वेत्ति निधाय मानसं स्वं विविधं चाच्युतशास्त्रजालमुच्चैः ।
अवधूतजरामयः स मर्त्यः सुचिरं जीवति वीतमृत्युभीतिः ॥१३॥
वपुषोऽशुचिता जनस्य शश्वत् परमां शुद्धिमिहातनोति पुंसाम् ।
शरदम्बुजपेलवस्य देहे दृढ़तो घनताञ्च शीतरश्मिः ॥१४॥
चलितं सहसा महारसेन्द्रं कमलालोकनतो वियत्सरोजात् ।
इह ये विनिधारयन्ति सन्तो ननु धीराः पुरुषोत्तमास्त एव॥१५

---

स्वाधिष्ठानमिति । तदूर्द्ध्वं रसदलैः स्वकुलैः पृष्ठादितर्काक्षरैः पृष्ठं वकारः तदादितः मयवलः एभिर्बिन्दुभूषितमस्तकैः सबिन्दुकैर्युक्तं बालादित्यनिभं प्रातःकालीनसूर्यतुल्यम् अस्य चक्रस्याधिपा राकिणी ॥ ११ ॥

इह किल समलस्यायां नियमितमरुतां योगिनीकलातिशयं दर्शयति इह स्वाधिष्ठान इति । लयवशात् पद्मोदरनिवेशवशात् समेताङ्गोऽनङ्गः मृगदृशीगणं रमयति । तथा स्मर स्मेरापाङ्गं स्मरेण स्मेरमल्पप्रकाशम् अपाङ्गं नेत्रयोरन्तं यस्य गणस्य तम् । तथा कान्त्या लावण्येन कलितं संरब्धम् ॥ १२ ॥

विशेषफलमाह इहेति । विगतजरामयः स मर्त्यः इह पद्मे स्वं मानसं निधाय अर्पयित्वा अच्युतशास्त्रसमूहं विविधं नानाप्रकारं वेत्ति वीतमृत्युभीतिः त्यक्तयमभयः । अन्यपद्मस्य दर्शनात् अशुचिता जनस्य शरीरस्य नित्यं शुद्धिं तनोति पुंसः शीतरश्मिः शुक्रः दृढ़बन्धः सन् घनतां निबिड़तां यातीति शरदम्बुरुहवत् पेलवः सुन्दरः ॥ १३ । १४ ॥

मदधौतकटौ महागजेन्द्रो वशतामेति यथा शनैरुपायात्।
बलवानिह वै सुधाकरोऽसौ क्रमरुद्धः स्ववशो भवत्यवश्यम् ॥१६॥

एतस्मिन् कुलिशाब्जयोगनिरतादादौ लयो जायते
रागादिन्द्रियदन्तिनां लयवशात् संवित्तिरप्यूर्जिता।
अन्तर्नीलमहारसद्रवजुषां नृणान्तु चेतो यदा
आविर्भावमुपैत्यमन्दसहजानन्दच्छलेन्दूदयः ॥ १७ ॥

नाभिस्थं मणिपूरकं दशदलैर्नीलाञ्जनाभैर्युतम्
तड्डाद्यैश्च दशाक्षरैर्दलगतैर्विन्दूल्लसन्मस्तकैः।
लाकिन्या समधिष्ठितञ्च सततं ध्यानैर्नराः केवलम्
वश्याकर्षणनिर्विषीकरणपूःक्षोभादिकं कुर्वते ॥ १८ ॥

स्थानेऽस्मिन्निहितात्मनः सुकृतिनः पातालसिद्धिं पराम्
खड्गस्याप्रतिमस्य साधनमपि स्यादीप्सितञ्च क्षितौ।
रूपं भूमिविसर्जनं परपुरे शक्तः प्रवेष्टुं जरा-
हानिश्चाखिलदुःखरोगशमनं कालस्य वा वञ्चनम् ॥ १९ ॥

---

चलितमिति। सहस्रदलाच्चलितं रसेन्द्रं शुक्रम् एतत्कमलालीकनतो ये विनिधारयन्ति ते पुरुषोत्तमाः। एतत्पद्मभावनयोगशक्ताः ॥ १५ । १६ ॥

एतस्मिन् कुलिशाब्जेति। तदेव योगः तस्मिन् रतात् रागादिन्द्रियदन्तिनां लयो भवति अतएव कुलिशत्वेन निरूपितम्। संवित्तिः ऊर्जिता। अन्तर्नीलमिति। अन्तर्नीलं यन्महाद्रवं शुक्रं तदेव रसं तत्सेवितानां नृणां चेतो यदा आविर्भावं प्राप्नोति तदा अमन्दं महत् यत् सहजानन्दं तच्छलेन अविद्याध्वंसादभ्युदयात् इन्दुत्वेन निरूपितः ॥ १७ ॥

मणिपूरकमाह नाभिस्थमिति। नीलाञ्जनतुल्यैर्दशदलैर्युतम् ड्ड ढ ण त थ द ध न प फ एतैर्दलगतैः विन्दूल्लसन्मस्तकैः सविन्दुकैर्युतं लाकिन्या समधिष्ठितञ्च एतद्ध्यानात् वश्याकर्षणनिर्विषीकरणं परपुरक्षोभकरणं परपुरप्रवेशं तिरस्करणी सुकीविद्या इति यस्य प्रसिद्धिः। ननु रत्नात् मणिपूरकमिति वचनात् कथं नीलरत्नमिति चेत् नीलरत्नस्यापि रत्नत्वान्न दोषः। पातालसिद्धिः अधो विवरकरणं

हृदये रसेन्द्रगोपसन्ध्याघनसिन्दूरसुवर्णमब्जम्।
यदनाहतमित्युशन्ति सन्तो रविसङ्ख्यैरुपशोभितं दलैः ॥२०॥
क्रोधीशाद्यैर्भैरवैर्भानुसंख्यैर्दण्डोपेतं मण्डितं चण्डवीर्य्यैः।
तत् काकिन्याधिष्ठितं दिव्यशक्त्या देव्या हंसेनापि देवेन शश्वत्
॥ २१ ॥

एतस्मिन् सततं निविष्टमनसः स्थाने विमानस्थिताः
क्षुभ्यन्त्यद्भुतरूपकान्तिकलिता दिव्यस्त्रियो योगिनः।
ज्ञानञ्चाप्रतिमं त्रिकालविषयं चोभः पुरस्य श्रुति-
दूराद्देव च दर्शनञ्च खगतिः स्याद्योगिनां मेलनम् ॥२२॥
विशुद्धाख्यं कण्ठे नलिनमथ धूम्रानलरुचि-
युतं श्रीकण्ठादिस्वरपरिगतैः षोड़शदलैः।
इह स्थाने शाकिन्यतुलनिजशक्तिर्भगवती
स्थिता नित्यं देवी शरणगमनार्त्तिप्रशमनी ॥ २३ ॥
अभ्यासयोगादिह सन्निविष्टस्वान्तस्य शश्वन्नरपुङ्गवस्य।
समर्थता स्यादनधीतशास्त्रसद्भावभावे वसुधातलेऽस्मिन् ॥ २४ ॥

---

मूकजरादिना खड्गसाधनमपि तान् ईप्सितसाधनं रूपञ्च केचित् परपुरे मृतशरीरे प्रवेष्टुं शक्तिमिति वदन्ति ॥ १८ ॥ १९ ॥

अनाहतचक्रमाह हृदय इति। इन्द्रगोपो रक्तवर्णकीटविशेषः क्रोधीशाद्यैः ककाराद्यैः ठकारान्तैः क ख ग घ ङ च छ ज झ ञ ट ठ इति क्रोधीशद्वादश-भैरवसहितैर्द्वादशाक्षरैर्युक्तं द्वादशदलात्मकं कर्णिकान्तर्गतं मूलमन्त्रशक्त्या काकिन्या चाधिष्ठितं हंसेन चात्मना च दण्डोपेतैः सबिन्दुभिर्मण्डितम् ॥ २० ॥ २१ ॥

एतस्मिन्निति। एतस्मिन् स्थाने निविष्टमनसो योगिनः। कर्त्तृभूताः विमानस्थिताः दिव्यस्त्रियः कर्मभूताः अद्भुतरूपकान्त्या कलितम्। अन्यच्च त्रिकाल-विषयज्ञानञ्च अतुलं दूरात् श्रवणं दर्शनञ्च योगिनां सम्मेलनञ्च ॥ २२ ॥

विशुद्धचक्रमाह विशुद्धेति। श्रीकण्ठादिस्वरपरिगतैः अकारादिस्वरै-र्दलपरिगतैर्युतं तद्यथा—अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं

स्थानेऽत्र संसक्तमना मनुष्यस्त्रिकालदर्शी विगताधिरोगः ।
जित्वा जरामञ्जननीलकेशः क्षितौ चिरं जीवति वीतमृत्युः ॥२५॥

इह स्थाने चित्तं सततमवधायात्तपवनो
यदि क्रुद्धो योगी चलयति समस्तं त्रिभुवनम् ।
न च ब्रह्मा विष्णुर्न च हरिहरौ नैव खमणि-
स्तदीयं सामर्थ्यं शमयितुमलं नापि गणपः ॥ २६ ॥

आज्ञानाम भ्रूयुगमध्ये दलयुग्मो-
पेतं पद्मं शारदचन्द्रमयूखाभम् ।
हाकिन्युक्तात्रापि च देवी दलयुग्मे
वर्णावन्त्यौ विन्दुयुतौ संस्मरणीयौ ॥ २७ ॥

ध्यानयोगनिरतस्य जायते पूर्वजन्मकृतकर्मणां स्मृतिः ।
नेत्रविन्दुनिलये च दूरतो दर्शनश्रवणयोः समर्थता ॥ २८ ॥
इह सन्निहितस्वचित्तवृत्तिः प्रतिमायाः प्रतिजल्पनं करोति ।
गमनञ्च पुरे परेषां पुनरुत्थानमप्यहो मृतस्य ॥ २९ ॥

निरालम्बां मुद्रां निजगुरुमुखेनैव विदिता-
मिह स्थाने कृत्वा स्थिरनिश्चितधीः साधकवरः ।
सदाभ्यासोऽपश्यत्यमरनिलयानन्तरखिला-
नुडुश्रेणीं विष्णोरपि पदमुडूनामपि पतिम् ॥ ३० ॥

---

अँ अः इति षोडशस्वरैर्युक्तं धूम्रसमानवर्णं शाकिनीदेवताधिष्ठितं विशुद्धाख्यं पद्मं शरणगमनार्त्तिप्रशमनी जन्ममरणदुःखप्रशमनी अनधीतशास्त्रसद्भावे सद्भावत्वं इह स्थाने चित्तमेवावधाय अवधानं कृत्वा आत्तपवनो गृहीतपवनो योगी ॥२३—२६॥

आज्ञाचक्रमाह आज्ञानामेति। दलयुग्मोपेतं द्विदलयुक्तं अन्त्यौ वर्णौ हकार-क्षकारौ एतदुक्तं भवति भ्रुवोर्मध्ये सविन्दुकाभ्यां हकारक्षकाराभ्यां युक्तं द्विदलात्मकं शरदम्बुजसङ्काशं हाकिनीदेवताधिष्ठितम् आज्ञाकमलं मृतस्य पुनरावृत्तिर्न विद्यते जन्माभावात् ॥ २७—२९ ॥

ब्रह्माणं सुरवृन्दवन्दितपदद्वन्द्वं मुकुन्दं तथा
देवं देवनिकायनायकमपि प्रेताधिपं वारिपम् ।
अर्क्कं वह्निमपि प्रभुञ्च पवनं तार्क्ष्यंञ्च यक्षेश्वरम्
गन्धर्वानपि किन्नरानपि गुणैः सिद्धान् प्रसिद्धानपि ॥२१॥
यक्षान् राक्षसपुङ्गवानपि मुनीन् दिव्यांश्च भव्याकृती-
नन्तःकान्तिकलाकलापकलितान् विद्याधरान् मातृकाम् ।
रक्षोत्तुङ्गतरङ्गसङ्गतजलां स्वर्लोककल्लोलिनीम्
योगी पश्यति शश्वदञ्चितरुचिं तत्रापि हेमाचलम् ॥ २२ ॥

उत्तुङ्गपीवरपयोधरभारनम्र-
कम्राङ्गभङ्गजमतङ्गजमन्दयातम् ।
उल्लासिचिल्लियुगलं चकितैणशाव-
लोलेक्षणं विसरमप्सरसां तथैव ॥ २३ ॥

समुत्तुङ्गैः शृङ्गैः स्थगितगगनाभोगककुभो
लसन्नानारत्नाकलितकटकान् भूधरवरान् ।
कुरङ्गैः सारङ्गैरपि च रमणीयां वनभुवम्
तथा गुर्वीमुर्वीं महितविविधक्षेत्रसहिताम् ॥ २४ ॥
तरङ्गैरुत्तुङ्गैरहिमकरमातङ्गनिकरैः
करालानाभीरैरपि जलधरैर्भूधरवरैः ।
तथा पारावारानमलसरितो वारिभरिताः
सहंसालीमालीमपि च सरसां सारसजुषाम् ॥ २५ ॥

---

निरालम्बामिति । इह विन्दुनिलये आज्ञास्थाने निरालम्बां खेचरीं मुद्रां बद्धा अमरनिलयः स्वर्गः तदूर्द्धम् अखिलाम् उडुश्रेणीं नक्षत्रश्रेणीं पश्यति विष्णोः पदम् आकाशम् । अर्क्कं प्रभुं सूर्य्यम् उल्लासिचिल्लियुगलं भ्रूयुगलम् । अप्सरसः विसरं समूहं पश्यति भूधरानपि पश्यति तान् कीदृशान् वृहच्छृङ्गैः स्थगितं गगनमण्डलं दिक् च यैस्तान् । कुरङ्गादिभीरमणीयां वनभुवञ्च पश्यति । मतङ्गोऽक्

सम्मरालं वककोटिमालं तड़ित्करालान्तरवारिलीनम्।
कलापिकान्तं सधवानुकूलं प्रवासिकालं नवमेघजालम्॥२६॥

एतस्मिन् परमाद्भुताव्ययमहानन्दैककन्दे परे
स्थाने मानसमात्मनः स्थिरमतिः संयोजयेन्मुद्रया।
योगी तन्मयतामुपैति यनकैश्चेतो निरालम्बया
पश्चान्निजमहासुखं लयवशादाविर्भवत्यन्तरम्॥ २७॥
लीने चेतसि तत्र विन्दुनिलये वह्नेरिवादौ कला
दृश्यन्ते तदनन्तरञ्च विलसद्रूपाः प्रदीपाङ्कुराः।
बालस्येव दिवाकरस्य बहलद्योतिस्ततो द्योतते
यद्वा भूगगनान्तरालविलसज्ज्योत्स्नासपत्नं महः॥२८॥
नित्यानन्द इति श्रियः पतिरिति श्रीवासुदेवः पुमान्
आत्मेत्यच्युत इत्यचिन्त्यमहिमा यो गीयते योगिभिः।

---

जलहस्ती सरसां आलीं समूहं मरालं राजहंसम्। वककोटिः वकं इति मयूरप्रियकालं प्रीतिजनकत्वात्। सधवाः पतिसहिताः तासाम् अनुकूलं प्रवासिकालं प्रवासिनीनां कालं यमस्वरूपं नवमेघजालं नूतनमेघसमूहो यत्र तं कीदृशम् इति तड़ित्करालान्तरवारिलीनं तड़िता सौदामिन्या करालं भयानकं यदन्तर्वारि तत्र लीनं निमग्नम्॥ २०—२६॥

एतस्मिन्निति। परमम् अद्भुतम् अव्ययं यन्महानन्दं तस्यैककन्दे मूलस्वरूपे परे स्थाने आत्मनो मानसं मुद्रया निरालम्बया स्थापयेत्। तदा योगी तन्मयतां ब्रह्ममयताम् उपैति। वाकारः समुच्चये। इति निरालम्बया मुद्रया निजं महासुखं ब्रह्मानन्दसुखम् अन्तरं अन्तर्गतं लयवशादाविर्भवति प्रकाशते। अस्मिन् चेतसि लीने सति आदौ वह्नेः किरणस्या शिखा दृश्यन्ते। तदनन्तरञ्च प्रदीपाङ्कुराः अनन्तरञ्च बालस्य सूर्य्यस्य उद्योतः प्रकाशः ततो द्योतते प्रकाशते। यद्वा तन्महत्तेजः प्रकाशते आविर्भवति कीदृशम् आकाशमध्ये विलसत् यत् ज्योत्स्नारश्मयस्तत्तुल्यम्। अस्मिन् स्थाने अव्ययः परमेश्वरः साक्षादात्मा साक्षिस्वरूपी भवति॥ २७। २८॥

स एव क इत्याह नित्यानन्द इत्यादि। यथा अम्बरान्तरगतौ राहुश्चन्द्रार्कयोः

स्थानेऽस्मिन् परमेश एष भगवान् व्यक्तो भवत्यव्ययः
साक्षी राहुरिवाम्बरान्तरगतश्चन्द्रार्कयो र्मण्डले ॥ ३९ ॥
विश्वस्यायतनं महद्भगवतः स्थानं तदेतत्परम्
यत्रारोप्य समीरणं सुकृतिनः प्राणप्रयाणे नराः ।
दीव्यन्तं परमं पुराणपुरुषं वेदान्तवेद्यं कविम्
विश्वाद्यं प्रविशन्ति सन्ततमहानन्दैककन्दं विभुम् ॥ ४० ॥

सहस्रारपद्मं विसर्गादधस्तादधो वक्त्रमारक्तकिञ्जल्कपुञ्जम् ।
कुरङ्गेण हीनस्त्रिशृङ्गस्तदन्तःस्फुरद्रश्मिजालः सुधांशुः समास्ते ४१
तदन्तर्गतं ब्रह्मरन्ध्रं सुसूक्ष्मं यदाधारभूतं सुषुम्नाख्यनाड्याः ।
तदेतत् पदं दिव्यमत्यन्तगुह्यं सुरैरप्यगम्यं सुगोप्यं सुयत्नात् ॥४२॥

एतत् कैलाससंज्ञं परमकुलपदं विन्दुरूपी स्वरूपी
यत्रास्ते देवदेवो भवभयतिमिरध्वंसहंसो महेशः ।
भूतानामादिदेवो रसविसरसितां सन्ततामन्तरङ्गे
सौधीं धारां विमुञ्चन्नभिमतफलदो योगिनां योगगम्यः ॥४३

---

मण्डले इति दृष्टान्तच्छलेन पिङ्गलायाश्चन्द्रसूर्य्यात्मकत्वात् । ईडापिङ्गलयोर्मध्ये सुषुम्नाया भोक्तृत्वात् सुषुम्ना राहुरिति प्रतिपादिता ॥ ३९ ॥

विश्वस्येति । विश्वस्य प्रपञ्चस्वरूपस्यायतनं तदेव भगवतः स्थानं यत्र स्थाने आज्ञास्थाने समीरणमारोप्य प्रापय्य सुकृतिनो नराः दीव्यन्तं क्रीडन्तं पुरुषं प्रविशन्ति इति । अतएव पुरा अजरामरं जरामृत्युविहीनं वेदान्तेन वेद्यं विश्वाद्यं विश्वादौ भवं जन्म यस्य तं प्रविशन्ति । महानन्दस्यैकमूलप्रभवं विभुम् ॥ ४० ॥

सहस्रदलपद्ममाह सहस्रारपद्ममिति । आवरणदलं सहस्रदलपङ्कजमित्यर्थः । विसर्गस्य रूपातीतस्य कुलादिपदस्यावाग्भव्यो इत्यर्थः । अधोमुखे आरक्तकिञ्जल्कपुञ्जे यत्र रक्तकेशरमित्यर्थः । कुरङ्गेण हीनः विनाशितकलङ्कः त्रिशृङ्गेण युक्तः त्रिकोणाकारः स्फुरद्रश्मिजालः स्फुरत्प्रभासमूहः सुधांशुरमृतकरः समास्ते ॥ ४१ ॥

तदन्तर्गतमिति । तन्मध्ये ब्रह्मरन्ध्रं सूक्ष्माकारं सुषुम्नाख्यनाड्या आधारभूतायाः सुषुम्नैव निष्कलचैतन्यात्मकपरमेश्वरस्योपाधिभूतचित्कला इन्दुमण्डलमध्यवर्त्तिनी ब्रह्मरन्ध्रमाधारीकृत्य देहमनुगता इत्यर्थः । तथाचोक्तं योगार्णवे—शक्तिर्यत्र स्वयं

स्थानस्यास्य ज्ञानमात्रेण पुंसां संसारेऽस्मिन् सम्भवो नैव भूयः ।
भूतग्रामं सन्ततन्यासयोगात् कर्त्तुं हर्त्तुं स्याच्च शक्तिः समग्रा ४४
स्थाने परे हंसनिवासभूते कैलासनाम्नीह विधाय चेतः ।
योगी गतव्याधिरधःकृताधिबाधश्चिरं जीवति मृत्युमुक्तः ॥ ४५ ॥

स्थानेऽस्मिन् क्षयवृद्धिभावरहिता नित्योदिताधोमुखी
बालादित्यनिभप्रभा शशभृतः सास्ते कला षोड़शी ।
बालाग्रस्य विखण्डितस्य शतधा चैकेन भागेन या
सूक्ष्मत्वात् सदृशी निरन्तरगलत्पीयूषधाराधरा ॥ ४६ ॥
एतस्याः परतः स्थिता भगवती भूताधिदेवाधिपा
निर्वाणाख्यकलार्द्धचन्द्रकुटिला सा षोड़शान्तर्गता ।
बालाग्रस्य सहस्रधा विगलितस्यैकेन भागेन या
सूक्ष्मत्वात् सदृशी त्रिलोकजननी या द्वादशार्कप्रभा ॥४७॥

---

याति तदेवाधारमण्डलमिति । यदेतद्विसर्गेऽस्मिन्मङ्गलपदं तदेव कैलासाख्यविन्दुरूपी पुम्प्रकृत्यात्मकः विसर्गः । प्रकृतिर्मायाविन्दुसर्गात्मिका हंसः । तदात्मकमिदं जगदिति । कीदृक् भूतानामादिभूतः आदिस्वरूपः । सौधीं धारां अन्तरङ्गे अभ्यन्तरे मुञ्चन् । धारां कीदृशीं रसविसरसितां रसो द्रव्यविशेषः । तत्र सितां शुक्लां योगगम्यो भगवान् योगिनामभिमतफलप्रदः । अत्र कैलासस्थाने नियमितमयुता इत्युपरतः ॥ ४२ । ४३ ॥

अतिशयं दर्शयति स्थानस्यास्येति । इत्यादि सुगमम् ॥ ४४ ॥

स्थाने परे इति । स्वस्य परमहंसस्य निवासभूते गता व्याधयो यस्य सः । अधःकृता आधयोव्याधयश्च येन सः । बालादित्यसमप्रभा शशभृतश्चन्द्रस्य षोड़शी कला अतिसूक्ष्मा । शशभृतः कीदृशस्य बालाग्रस्य शतशो विखण्डितस्य एकैकभागेन सूक्ष्मत्वात् । कीदृशी निरन्तरगलत्पीयूषधाराधरेव भाति पीयूषधारा पीयूषवर्षमेघतुल्या ॥४५।४६॥

एतस्या इति । एतस्याः षोडशकलायाः परतः परस्मिन् भूतानामधिपो महेश्वरस्तस्याधिपा भगवती स्थिता निर्वाणसंज्ञाकला निर्वाणषोड़शीकला तां गता । कीदृशी बालाग्रस्य सहस्रधा विभक्तस्य दलितस्य एकेन भागेन सूक्ष्मत्वात् सदृशी द्वादशार्कतुल्या प्रभा कान्तिर्यस्याः ॥ ४७ ॥

निर्वाणाख्यकलापदोपरिगता निर्वाणशक्तिः परा
कोव्यादित्यसमप्रभातिगहना बालाग्रभागस्य या।
कोव्यंशेन समा समस्तजननी नित्योदिता निर्मला
नित्यानन्दपदस्थलोकविगलद्धारा निरालम्बना॥ ४८॥
एतस्याः परतः परात्परतरं निर्वाणशक्तेः पदम्
शैवं शाश्वतमप्रमेयममलं नित्योदितं निष्क्रियम्।
तद्विष्णोः पदमित्युशन्ति सुधियः केचित् पदं ब्रह्मणः
केचिद्धंसपदं निरञ्जनपदं केचिन्निरालम्बनम्॥ ४९॥
आरोप्यारोप्य शक्तिं कमलजनिलयादात्मना साकमेषु
स्थानेष्वाज्ञावसानेष्ववहितहृदयश्चिन्तयित्वा क्रमेण।
नीत्वा नादावसानं स्वगतकुलमहापद्मसद्मान्तरस्थाम्
ध्यायेच्चैतन्यरूपामभिमतफलसम्प्राप्तये शक्तिमाद्याम्॥५०॥
लाक्षालाक्षारसाभं गगनगतमहापद्मसद्मस्थहंसाम्
पीत्वा दिव्यामृतौघं पुनरपि च विशेन्मध्यदेशं कुलस्य।
चक्रे चक्रे क्रमेणामृतरसविसरैस्तर्पयेद्देवतास्ता
डाकिन्याद्याः समस्ताः कमलजपदगां तर्पयेत् कुण्डलीं ताम्॥५१
इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये पञ्चमः पटलः।

---

निर्वाणेति। निर्वाणाख्यकलापदं स्थानं तस्योपरि अधोगता निर्वाणशक्तिः स्थिता। कोव्यादित्यसमा प्रभा यस्याः सा अतएवातिगहना कीदृशी बालाग्रभागस्य शतभेदः कोव्यंशेन समा नित्यानन्दपदस्थानं शैवपदम्। तत्र लुकमंहती विमल-द्धारा यस्याः निरालम्बना अवलम्बनरहिता॥ ४८। ४९॥

आरोप्येति। कमलजनिलयात् मूलाधारात् शक्तिम् आरोप्य आत्मना साकम् एषु स्थानेषु शक्तिं चिन्तयित्वा क्रमेण नादावसानं नीत्वा आकाशगतब्रह्म महापद्म-मेव सद्म गृहं तस्यान्तरस्थां चैतन्यरूपां ध्यायेत्॥ ५०॥

लाक्षादिति। दिव्यामृतौघं पीत्वा गगनगतमहापद्मस्थितहंसां कुलस्य शरीरस्य

# षष्ठः पटलः ।

स्वयम्भुलिङ्गं निजयोनिमध्यवक्त्रान्तरे हृत्सरसीरुहान्तः ।
बालाह्वयं चेतरमन्तराले वदन्ति सन्तो गगनाम्बुजेऽन्ये ॥१॥
यद्वीजं वाग्भवाख्यं द्रुतकनकनिभं तत् स्वयम्भूतलिङ्गम्
स्थाने ध्यात्वा हृदम्भोरुहकुहरगते वाणलिङ्गे द्वितीयम् ।
कामाख्यं बन्धुजीवप्रसरसमरुचिं शारदेन्दुप्रभावम्
तार्तीयीकन्तु वीजं त्वितरपदगतं चिन्तयेच्छान्तरूपः ॥ २ ॥
प्राणान् योनिगतान् विधाय मनसा ध्यायन्ति तां भारतीम्
वीजाख्यां निजयोनिरन्ध्रनिलयादानाभिरन्ध्रोत्थिताम् ।

---

मध्यदेशं मूलाधारं विशेत् । ततः प्रतिचक्रे स्थिता डाकिन्याद्याः यदि समन्तादेव ततोऽमृतरससमूहैस्तर्पयेत् । ततः कमलजपदगां मूलाधारस्थां कुण्डलिनीञ्च तर्पयेत् ॥ ५१ ॥

इति त्रिपुरासारटीकायां पदार्थादर्शे पञ्चमः पटलः ॥

---

एवञ्चाधारेषु योगविशेषानुक्त्वा मूलाधाराद्याधारेषु स्वयम्भुलिङ्गवाणादिविशेषान् वक्तुमुपक्रमते स्वयम्भुलिङ्गमिति । योनिब्रह्मरन्ध्रान्तरानिति शृङ्गाकारे प्रागुक्तस्थाने स्वयम्भुलिङ्गं याति लयं यत्र जपेदिति तल्लिङ्गं लिङ्गञ्च चराचरमिति हृत्सरोजवान् लिङ्गमिति । इतरं लिङ्गं परलिङ्गमित्यर्थः । अन्तरालम् भ्रुवोर्मध्ये इति । अन्ये तु इतरपदम् एवं वर्णयन्ति । अन्तराले विन्दौ स्थितं तदितरं लिङ्गम् अन्ये तु गगनाम्बुजे विसर्गाख्ये परविन्दुनिर्मलपदे इत्यर्थः ॥ १ ॥

श्रीमूलविद्यायास्त्रयाणां वीजानां स्वयम्भुवाणलिङ्गयोर्ध्यानमाह । यद्वीजमिति । यद्वाग्भवाख्यं प्रथमवीजं निर्मलकाञ्चनसङ्काशं मूलाधारे स्वयम्भुलिङ्गात्मकं ध्यायेत् । यत्कामाख्यं मध्यवीजं कुसुमसङ्काशं हृदयकमलकर्णिकामध्ये वाणलिङ्गं तृतीयवीजं शारदेन्दुसङ्काशम् आज्ञास्थाने परलिङ्गात्मकं ध्यायेदित्यर्थः ॥ २ ॥

बालार्कारुणतेजसीं भगवतीं ये सिद्धलिङ्गाकृतिम्
तेषामेव कवित्वसम्पदतुला पीयूषनिःस्यन्दिनी ॥ ३ ॥
सिन्दूरारुणसुन्दरीभिरखिलं प्रोद्भासयन्तीं कुलम्
हृत्पद्मान्तरगां प्रभाभिरनिशं ये बाणलिङ्गाकृतिम्।
आविन्दोरुदितामनन्यमनसो ध्यायन्ति दिव्याङ्गनाः
कामार्त्ता विलपन्ति लोलमनसस्तेषां पदान्ते भुवि ॥ ४ ॥
ये गौरीमितराभिधां निजरुचा ध्यायन्ति लिङ्गाकृतिम्
बिन्दुस्थानगतां सुधाकरकरश्रीहारिणोद्भाविताम्।
अर्द्धेन्दुप्रतिमां विसर्गगमहापद्मश्रुतां बिभ्रतीम्
धारां विद्रुमपाटलामृतमयीं ते सम्पदामास्पदम् ॥ ५ ॥

त्रयाणां लिङ्गानामतिबहलतेजःस्रुतिजुषाम्
त्रिषु स्थानेष्वेषु स्थिरनिहितधीः साधकवरः।
जपेन्मन्त्रं लक्षं सरसकुसुमैर्ब्रह्मतरुजै-
स्त्रिमध्वक्तैर्होमं तदनु निशि चारेण जुहुयात् ॥ ६ ॥
निःशङ्कं हरिणाङ्कमम्बरतलात् पातालमूलं गतम्
तत्रस्थेन दिवाकरेण पुटितं कृत्वा समादाय च।

---

एतेषां बीजत्रयाणां जपध्यानफलविशेषफलश्चाह प्राणान् योनिगतानित्यादि। सिन्दूरारुणसुन्दरीभिः प्रभाभिः अखिलं कुलं मूलाधारादिचक्रमित्यर्थः। आबिन्दोरुदितां बिन्दुस्थानपर्य्यन्तं सुधाकरश्रीहारिणा महेशेन उद्भाविता। एवम्भूतां लिङ्गाकृतिं ये ध्यायन्ति ते सम्पदां पदं स्थानमिति। श्लोकत्रयेण साकल्येन जपतां ध्यानावशेषश्चाह त्रयाणां लिङ्गानामिति। जपेल्लक्षमिति। यल्लिङ्गं यद्बीजस्थानं तत्र तस्य लक्षजपः। तेन त्रिबीजेन लक्षं समुदायजपस्तु त्रिलक्षमिति नियमः। ब्रह्मतरुजैः पलाशकुसुमैः। निशि चारेण ईडायां वायौ गते सति ॥ ३—६ ॥

काम्यविशेषानाह निःशङ्कमिति। हरिणाङ्कः इडानाडीस्थितवायुः कार्य्ये कारणोपचारः। अम्बरतलात् नासास्थानात् प्रातालमूलं मूलाधारं ब्रह्मरन्ध्रगतं तत्रस्थेन दिवाकरेण पिङ्गलावायुना पुटितम् उभयवायोरैक्यं कृत्वा तं वायु-

राहोरास्यगतं कपालिकरणप्रस्तावनापण्डितः
कुण्डे हस्तकरण्डकेन जुहुयाद्धोमोऽयमत्यद्भुतः ॥ ७ ॥
एकं वत्सरमेवमेव शिवधी मर्त्यो जुहोतीह यः
सद्यो मृत्युमसौ विजित्य वपुषः पुष्टिं विशिष्टां दधत् ।
दर्पं दर्पकसन्निभो मृगदृशां भञ्जन् सुभृङ्गाङ्गना-
श्रेणीश्रीमदरालकुन्तलचयो जीवेदनेकाः समाः ॥ ८ ॥

---

मादाय राहोरास्यगते कुण्डलीमुखे हस्तकरण्डकेन हस्तरूपेण मनसा जुहुयात् । कपालिकरणप्रस्तावनापण्डितः कपालिकरणाख्यप्रक्रियायां प्राज्ञः ऊर्द्धाधःकरणं विदुरित्यत्र पण्डित इत्यर्थः । गुप्तार्थस्तु किञ्चित् प्रकाश्यते । हरिणाङ्कद्रव्य-विशेषः स्थानविशेषः स्थानविशेषगतं स्थानविशेषस्थदिवाकरेण द्रव्यविशेषेण पुटितं मिश्रितं कृत्वा राहोरास्यगते कुण्डे स्थानविशेषे हस्तकरण्डकेन हस्तरूपस्रुवेण जुहुयादिति । द्रव्यसंज्ञा अप्रकाश्या एतदर्थकथने शिष्टोपहास इति तन्त्रचूडा-मणिश्च राहुः शिरः शिरो वा गृहीत्वा चाडेन विशेत् । सूर्य्यात्मकं समादातुं यदा तस्यां तिथौ युते । पातालगम्या देवेश व्योमस्थानाद्दिवाकरम् । पतितं राहुचक्रे तु बुद्धेरक्यं प्रापयेत्ततः । राहुवक्त्रेण तत्कुण्डे होमं कुर्य्यात्तु तद्दिने । तत्र सञ्जायते द्रव्यं तदेव कुण्डगोलकम् । कुण्डं शिवस्त्वहायेनं गोलकं शिवहंसतः । एतत्त्रयाणां मध्ये तु स्वयम्भुकुसुमं महत् । क्वचिद्‌गन्धर्वराजेन लभ्यते वा न वा विभो ! । यदि तल्लभ्यते देवि ! आचारसंसमन्वितम् । कस्तूरीकुङ्कुमाक्ताञ्च वर्टीं कृत्वा तु गोपयेत् । मन्त्रराजं समालिख्य प्रयोगं तेन निर्वपेत् । तत्सिद्धिं समनु-प्राप्य स्वयमुत्तिष्ठते कुलम् । अमृतच्छोभयोर्देव ! भोक्तुं देवी न संशयः । सुप्तादि-दोषदुष्टा ये मन्त्रा विद्याश्च कीलिताः । प्रबुद्धास्तत्प्रयोगेण यावत् सा पुनरागता । द्वितीयायां गते देवि ! दृश्या या सा कलावती । तिथिक्रमेण सा देवी पौर्णमास्याः फलप्रदा इति । एतदर्थप्रकाशेन देवताशापो जायते इति । तत् कथं बहु-सूचितमिति ॥ ७ ॥

कौणनियमं फलञ्चाह एकमिति । दर्पः कन्दर्पः तत्तुल्यः सन् मृगदृशां दर्पं भञ्जन् अनेकाः समा जीवेत् चिरजीवी भवेदित्यर्थः । कीदृक् अरालः कुटिलाकारः कुन्तलचयः केशसमूहो यस्य सः । भृङ्गाङ्गनाश्रेणीनां श्रीर्विद्यते यस्य पेशात् भृङ्गा-ङ्गनाश्रेणीश्रीमांश्चासौ अरालकुन्तलश्चेति कर्मधारयः ॥ ८ ॥

ततो देवीं ध्यायेत् परिणतशरच्चन्द्रसदृश-
प्रसन्नस्मेरास्यामलिकलभसङ्काशकवरीम् ।
विराजन्तीं नेत्रैर्विकचनवनीलोत्पलनिभै-
स्त्रिभिर्दन्तश्रेणीरुचिविजितहारावलिरुचिम् ॥ ९ ॥

बन्धूकसान्ध्यघनबन्धुरकान्तिकान्तम्
मन्दस्मितांशुविशदीकृतमुद्वहन्तीम् ।
दन्तच्छदं रुचिरकुण्डलमण्डलञ्च
गण्डस्थलीयुगलखण्डसुधांशुपाण्डु ॥ १० ॥

उत्तुङ्गसङ्गतपयोधरभारनम्र-
कम्रा वनम्रविलसत्त्रिवलीतरङ्गाम् ।
गम्भीरनाभिविवरां वररामरम्भा-
स्तम्भोपमोरुयुगलामरुणाङ्घ्रिपद्माम् ॥ ११ ॥

कलां मौलाविन्दोर्गलदमलपीयूषविसराम्
वहन्तीं सम्लानप्रसवरचितं शेखरमपि ।
वसानां सद्वासोहिमकिरणनिर्मोकविशदम्
महाविद्यारूढां जठरशशभृत्कोटिधवलाम् ॥ १२ ॥

हस्ताभ्यामक्षमालां स्फटिकमणिमयीं ज्ञानमुद्राञ्च भद्राम्
बिभ्राणां दक्षिणाभ्यां मणिमयमुकुटां पुस्तकञ्चाभयञ्च ।
वामाभ्यां रत्नकाञ्चीपरिवृतजघनां रत्नकेयूरहाराम्
दिव्यालङ्कारयुक्तां त्रिभुवनजननीं दिव्यगन्धानुलिप्ताम् ॥ १३ ॥

---

ततो देवीं ध्यायेदिति सुगमम् ॥ ९ ॥

कीदृशीं देवीं दन्तच्छदं वहन्तीं कीदृशं बन्धूकपुष्पं सन्ध्यासम्बन्धि यद्घनं तेषां यन्मनोहरकान्ति तद्वत् कान्तं कमनीयम् । मन्दस्मितांशुना विशदीकृतम् । पुनः कीदृशीं उत्तुङ्गपयोधरभारनम्रकम्रावनम्रविलसत्त्रिवलीतरङ्गाम् उत्तुङ्गो यः पयोधरभारस्तेन नम्रं कम्रं अनवलम्बं कमनीयमुदरं तत्र त्रिवल्याकारस्तरङ्गो यस्याः

समुद्गिरन्तीमपि शास्त्रजालं निरन्तरं कान्तिकलासमग्राम् ।
विनम्रदेवासुरवृन्दमौलिमालारजोराजितपादपद्माम् ॥१४॥
ध्यात्वा वागीश्वरीं तां गगनगतमहाविन्दुपीठादतीत-
स्थानं चानीय तस्मादपि तदनु नयेदागतस्थानमेनाम् ।
शान्तातीतन्तु तस्मादनुपममहिमा सूर्य्यचक्रन्तु तस्मा-
द्व्योमाम्भोजं ततश्चाखिलभुवननुतामानयेत् प्रेतभूमिम् ॥१५॥
प्रेतस्थानादर्द्धचन्द्रं ततस्तामारम्भं तु प्रापयेत् सेतुबन्धम् ।
तस्माच्चैवं व्योम तस्मादमेयस्थानप्राप्तां चिन्तयेदीश्वरस्य ॥१६॥
तस्माद्रुद्रस्यालयं रुद्रगेहाद्विष्णुस्थानं प्रापयेद्देवदेवीम् ।
विष्णुस्थानाद्ब्रह्मणः स्थानमेनां ब्रह्मस्थानात् कुण्डलीगेहमध्यम् १७

सहस्रदलशोभिते रुचिरकर्णिकाकेशरे
लसन्महसि कुण्डलीभवनपङ्कजे तां स्थिताम् ।
विसर्गगगनगाख्यविन्दुविलसत्सुधाधारया
ततः समभिषेचयेद्भगवतीमविच्छिन्नया ॥ १८ ॥

---

ताम् । उरुर्महान यो रामकदलीस्तम्भः स एव उपमा ययोः ऊर्व्वोः ताम् अरुणमङ्घ्रि पद्मं यस्याः ताम् । तथा इन्दोः कलां मौलौ वहन्तीं कीदृशीं कलां गलत्पीयूषसमूहाम् । तदुत्प्रेक्षते सन्तानकप्रसवरचितं शेखरमिव कल्पवृक्षपुष्परचितं शेखरमिव किरीटमिव । हिमकरश्चन्द्रः निर्मोकी मुक्तकञ्चुकः तद्वद्विशदं निर्मलं तथा सवासो वसाना तथा महाविन्द्वारूढां गगनोपरि विन्दुस्थानमारूढ़ां तथा जठरशशभृत्कोटिधवलां परिपूर्णकोटिचन्द्रतुल्याम् ॥ १०—१४ ॥

एवं वागीश्वरीं ध्यात्वा विन्दुपीठात् विन्दुपीठोर्द्ध्वे अतीते स्थाने आनयेत् । तस्मादतीतस्थानात् आतपस्थानं तत आतपस्थानात् शान्तातीतं तस्माच्छान्तातीतात् सूर्य्यचक्रं ततो व्योमाम्भोजं ततः प्रेतस्थानं शिवस्थानं प्रेतस्थानादर्द्धचन्द्रं तस्मादारम्भं ततः सेतुबन्धं ततः पुनर्व्योम तत आमयम् ईश्वरस्य ततो रुद्रालयः रुद्रगेहाच्छक्तिस्थानम् ॥ १५ ॥ १६ ॥

तस्मात् कुण्डलिनीभवनं किमित्याह सहस्रेति । सहस्रदलशोभिते विसर्गगतो

अनेन शङ्खद्विहितेन देवी-
ध्यानेन नाशं समुपैति मृत्युः ।
याः सिद्धयो दिव्यगणाधिपस्य
भवन्ति ता अप्यचिरेण पुंसाम् ॥ १९ ॥

आधाराद्दुल्लसन्तीमकुलगतमहापद्मपर्य्यन्तमन्त-
र्ध्यायन्तीं ब्रह्मनाड्या स्फुरदमलरुचिप्रख्यरूपां भवानीम् ।
ये देवीं लिङ्गरूपां भुवि विमलधियो भावनामात्रगम्याम्
निर्द्धूताशेषपापा निखिलगुणयुता ज्ञानिनस्ते भवन्ति ॥२०॥

ये गोक्षीरतुषारहारधवलप्रोद्दामतेजश्छटा-
च्छायोल्लासितरोमकूपविवराशेषाङ्गलिङ्गाकृतिम् ।
वागीशीं धवलाम्बुजान्तरगलत्पीयूषधाराद्रवै-
रासिञ्चन्ति समन्ततोऽखिलवपुर्मृत्योश्च ते मृत्यवः ॥२१॥

लिङ्गाकारधरां सुरासुरयुतां सौषुम्ननाड्यन्तरे
देवीमञ्जनपुञ्जमेचकरुचिं सिञ्चन्ति शङ्खद्भुवि ।
ये दिव्यामृतधारया प्रचुरया कालाग्रदूती नृणाम्
रूपोन्मूलनदृष्टिपाटवधरा तेषां कुतो विस्रसा ॥ २२ ॥

लाक्षारसस्नपितभग्नमृणालनाल-
तन्तूपमां स्मरति यस्त्रिपुरां कुलान्तः ।
तं विस्मरन्ति मितचारुदृशः स्मरार्त्ता
वामभ्रुवो रतिपतिप्रतिमं स्मरन्ति ॥ २३ ॥

सिन्दूरपूरपरिपिञ्जरितामिव द्याम्
लाक्षारसार्द्रितमिव क्षितिमण्डलञ्च ।

---

यत्शङ्खाख्यविन्दुः तत्र विलसन्ती या सुधाधारा तया देवीं समभिषेचयेत् । ननु
कुण्डलिनीगेहं मूलाधारं तत् कथमुक्तमिदं सत्यं मूलादिब्रह्मरन्ध्रान्तं कुण्डली

ध्यायन्ति ये रुचिचयैर्हरवल्लभाया
लज्जां विहाय भुवि तानुपयान्ति कान्ताः ॥ २४ ॥

शक्तिं हंसेन युक्तां कमलजनिलयाद् ब्रह्मनाड्यन्तराले
निष्यन्दच्चन्द्रविम्बान्तरगलितसुधाविन्दुसन्दोहपद्मम् ।
नीत्वा तत्रैव नित्यं स्मरति खगगतामात्मना शक्तिमाद्याम्
यस्तस्याजाण्डखण्डप्रलयमपघनं स्याद् घनं मृत्युमृत्योः ॥२५॥

पीताभां स्तम्भनादौ शशधरधवलां शान्तिकादौ सुधूम्रा-
मुच्चाटादौ जवाभां त्रिभुवनजनताकर्षणे कामने च ।
नित्यां नित्यं विशुद्धस्फटिकमणिनिभां खेचरत्वादिसिद्धौ
मोक्षे साक्षादपेताम्बुदगगननिभां भावयेच्छक्तिगम्याम् ॥२६॥

मार्गेऽस्मिन्नवलक्षमक्षयपदप्राप्तौ ततो लक्षये-
न्मन्त्राणामिह येन सिद्धिरतुला पञ्चप्रकारापि च ।
आधारध्वजनाभिदेशहृदये कण्ठे तथा लम्बिके
भ्रूमध्येऽपि च भूतनाथनिलये स्थाने नवान्तेऽपि च ॥२७॥

आधारे कनकप्रभां परिलसद्दीपाकृतिं षण्मुख-
स्थाने नूतनभानुकान्तिसदृशां नाभौ हृदम्भोरुहे ।

---

भवनं विदुः । आद्यमाम्नाय भवने ज्ञानगीर्पूर्वी विराजते । भाग्याद्विष्णुपदं गत्वा राजते निजमन्दिरे । ज्ञानदा तव सा देवी कुण्डली परदेवता । अविद्याविषयी-दीनाद्भवत्र प्रकाशिता । क्रीडीकृत्य जगत् सर्वं कारागारमिव स्थितेति । शक्ति-मिति शक्तिं कुण्डलिनीं हंसेन युक्ताम् आत्मना सह हंसमन्त्रेण मूलादिस्थानात् सहस्रदलपद्मं नीत्वा यः स्मरति तस्यापद्घनं निर्दोषं भवति ॥ १७—२५ ॥

कर्मविशेषे ध्यानमाह पीताभामिति । काम्यजपमाह मार्गेऽस्मिन्निति । अस्मिन् मार्गे सुषुम्नावर्त्मनि वक्ष्यमाणस्थानेषु अक्षयफलप्राप्तौ मोक्षफलप्राप्तौ लक्षयेत् ध्यायेत् । सिद्धिरतुला पञ्चप्रकारा चेति सिद्धयः । पातालगुटिकाञ्जनखड्गमुद्राद्या अधिका मन्त्रयोगात्मज्ञानाख्या चेति ॥ २६ ॥ २७ ॥

तत्र किं रूपेण ध्यात्वा जप्तव्यमित्याह आधार इति । षण्मुखस्थाने षड्धर्मीस्थाने

दीपाकारनिभां तथा खरकरोद्द्योतप्रभां भावयेत्
कण्ठे दीपशिखाकृतिं मणिगणोद्योतां भ्रुवोरन्तरे ॥२८॥
नवान्ते च ज्योतिर्भवभयतमोध्वंसकुशलम्
तदेतद्बिन्द्वाख्यं निरतिशयशर्मोर्मिजनकम् ।
दुरापं पापैर्यत् त्रिभुवनधरं त्रैपुरमिति
प्रतीतं तत्त्वानां यदुपरिगतं यच्च परमम् ॥ २८ ॥

इति त्रिपुरासारसमुच्चये षष्ठः पटलः ।

## सप्तमः पटलः ।

अथामरेन्द्रैरपि दानवेन्द्रैर्धृतं प्रसिद्धैरपि सिद्धवर्गैः ।
सौभाग्यसम्पत्तिगुणैकहेतुं यत्त्रैपुरं तत् कथयामि मन्त्रम् ॥१॥
कर्पूरचोदद्दिग्धाखिलतनुरमलः स्नानपूतो वसानः
क्षौमं श्रीखण्डपङ्कस्फुटरचितलसच्चित्रको नेत्रयुग्मम् ।
मन्त्री कृत्वाञ्जनाक्तं मधुरसविरसप्राप्तहर्षप्रकर्ष-
स्ताम्बूलग्रासपूर्णारुणमुखकुहरश्चालिखेन्मन्त्रराजम् ॥२॥

---

स्वाधिष्ठाने इत्यर्थः । नूतनं प्रातःकालीनतूर्य्यवर्णसदृशम् । खरकरद्योतः खरस्त्रीमूल-द्योतन यस्य तत्प्रभां ध्यायेत् । नादान्ते नादान्तपर्य्यन्तम् ऊर्द्ध्वं गच्छति यत् ज्योतिस्त-देव बिन्द्वाख्यम् अतिशयानन्दजनकं पापात्मभिर्न राग यत्त्रैश्वरं परमं महः । प्रतीतं ज्ञातव्यं चतुर्विंशतितत्त्वानामुपरिगतञ्च ॥ २८ २॥ ६ ॥

इति त्रिपुरासारसमुच्चयटीकायां पदार्थादर्शे षष्ठः पटलः ।

---

एवं मूलाधारस्थानेषु वाग्भवादिबीजानां स्वयम्भुवाणलिङ्गात्मकत्वे ध्यानविशेषा-श्चोक्ता अनन्तरं सौभाग्यलक्षणादि सर्वैश्वर्य्यपदं यन्त्रमाह अथामरेन्द्रैरित्यादिना ॥१॥

कर्पूरचोदद्दिग्धाखिलतनुः कर्पूरचोदेन भग्नकर्पूरेण दिग्धा लिप्ता अखिल-तनुर्येन सः । अवलिन्द्रियमनोवृत्तिरित्यर्थः । क्षौमं पट्टवस्त्रं वसानः श्रीखण्ड-

कस्तूरिकागुरुसुधाकरखण्डकुङ्कुम-
गोलोत्थजाङ्गलगुडैः सपटीरपङ्कैः ।
युक्तैः स्वयम्भुकुसुमेन विशालभूर्ज-
पत्रे लिखेदविवरे तपनीयसूच्या ॥ ३ ॥
लिखेद्भूपपत्राणि वृत्तं तदन्त-
र्बहिर्मासपत्राणि तद्वाह्यदेशे ।
पुनर्भूपत्राणि तेषां दलानाम्
बहिर्दन्तपपत्राणि चारूणि धीरः ॥ ४ ॥
ततः कर्णिकायां महायोनिमध्ये
लिखेद्वाग्भवं कामबीजञ्च शक्तिम् ।
तयोरूर्द्ध्वतः कारयेद्धंसदेवो-
परिष्टाज्जगन्नायिकां षोड़शारे ॥ ५ ॥
ततः षोड़शैः स्वरान् द्वादशारे
पुनः कामबीजं लिखेत्तत्र बीजम् ।
लिखेद्वासरेशस्वरैर्भिन्नमेवम्
विधायान्त्यबीजं परे षोड़शारे ॥ ६ ॥

---

पङ्केन स्फुटरचितं लसत्तिलकं पुण्ड्राकारं येन स तथा । नेत्रयुग्मम् अञ्जनाक्तं कृत्वा मधुरसविसरपलीत्याप्तौ यो हर्षः तेन प्रकर्षः प्रकृष्टः तथा ताम्बूलग्रासपूर्णा-र्णमुखकुहरः समुदितान्तर्वर्त्तिः स्वरः सरूपवेशोऽम्बिकायाः पादाम्बुजभृङ्गाय-मानमानसः । स्वगुरुचरणप्रणामपुरःसरं यन्त्राणि विलिखेत् इत्याह कर्पूरचोद-दिग्धाङ्ग इत्यादिना ॥ २ ॥

यन्त्रलिखनद्रव्याण्याह कस्तूरिकेत्यादि । सुधाकरखण्डं कर्पूरखण्डं पटीरं रक्तचन्दनं कुङ्कुमगोलादिद्रव्यं गुरुवक्त्रगम्यं देवतानामपि दुर्लभत्वात् न प्रकाशितम् । इहङ्भूर्जपत्रे अविवरे अच्छिद्रे तपनीयसूच्या सुवर्णशलाकया ॥ ३ ॥

यन्त्रलिखनप्रकारमाह लिखेद्भूपपत्राणीत्यादिना । भूपाः षोडशसंख्यका राजानः । तथाहि मायः अम्बरीशः शशविन्दुः अङ्गः पृथुः मनरत्नान खरतः स्वाहाद्रः

कलाबिन्दुनादैः शिरोदेशलग्नैः
परिभ्राजमानान् ककारादिवर्णान्।
लिखेद्दन्तपत्रेषु सर्वं तदेतद्
भुवो मन्दिरस्योदरस्थं विदध्यात्॥ ७॥

शुषिरेण वेष्टयेत् समन्तादथ मन्त्री महनीयमन्त्रराजम्।
सुविशुद्धसुवर्णपट्टबद्धं विदधीतात्मकृतादिसिद्धमेनम्॥ ८॥

इयं रक्षा साक्षात्त्रिपुरमथनेनापि विभुना
श्रियः कान्तेनापि त्रिदशगुरुणा चापि हरिणा।
धृता कन्दर्पेणाप्यमृतकिरणेनापि विनता
तनूजेनाप्येषा सततमपि शीतेतररुचा॥ ९॥

गन्धर्वैरपि किन्नरैरपि धृता यक्षैः सदा राक्षसैः
सिद्धैः साध्यगणैश्च पन्नगवरैर्विद्याधरैर्गुह्यकैः।
सौभाग्यार्थिभिरेव शुद्धहृदयैरस्यै जगन्मङ्गलै-
र्मङ्गल्या मनुजोत्तमैरपि नृपैर्वश्यार्थिभिः कामिभिः॥१०॥

---

वायो दिलीपः गिरिः रन्तिदेवः ययातिः आत्मभूः रघुः भगीरथः एते भूपचन्द्राः षोड़शकलात्मकाः षोड़श पत्राणीत्यर्थः। तद्वहिर्मासपत्राणि द्वादशपत्राणि तद्वहिः षोडशपत्राणि तद्वाह्ये पुनर्दन्तपत्राणि द्वात्रिंशत्पत्राणि। ततः कर्णिकायां महायोनि-मध्ये षटकोणैर्वाग्भवं कामराजशक्तिकूटरमाविस्मयाद्बीजपत्रम्। एतयोर्वाग्भव-कामराजयोरुपरि हंसमन्त्रं तस्योपरि मूलविद्यां लिखेत्। षोडशदले षोड़शस्वरान् एकारान् षोडश स्वरानिति पाठः। षोडशस्वरलिखनं द्वादशारे पुनः कामबीजं बालाया द्वितीयबीज ततः परे षोडशारे वामरेशस्वरैर्द्वादशस्वरैरैकारैः सम्भिन्नम् औकारस्थाने आदेशीकृतं रजोबीजं लिखेत्॥ ४—६॥

ततः कलाबिन्दुनादैः कलास्वरूपैर्बिन्दुनादैः शिरोदेशे लग्नैः ककारादि-द्वात्रिंशद्वर्णैः द्वात्रिंशत्पत्रेषु लिखनम्। अन्ये तु अन्यथा वर्णयन्ति। कलावाग्भवं बिन्दुः सनादो हकारः ऐकारसकारहकारभिन्नैः ककारादिवर्णैरित्यर्थः। बिन्दु-नादकलात्मिकामिति। भुवो मन्दिरं चतुरस्रं भुवो मन्दरमिति पाठे मन्दरं

इह बन्धुरगन्धसिन्धुरैर्मदधाराविनिलिप्तगण्डपिण्डैः ।
तुमुले युधि यन्त्रराजशक्त्या समवाप्नोति जयश्रियं नरेन्द्रः ॥११॥
नरपालगृहे दुरोदरे व्यवहारेऽपि च धारणादमुष्य ।
मनुजोऽपि च वादिभिर्विवादे जयमाप्नोति यन्त्रसत्तमस्य ॥१२॥
विपिनेषु लुलापचित्रकायद्विपभल्लूककुलाकुलेषु पुंसाम् ।
चरतां न चिराय विद्यते भीस्त्रिपुरायन्त्रवरस्य धारणेन ॥१३॥
नरनाथवरा भवन्ति वश्यास्तदधीनाः सचिवाश्च तत्तनूजाः ।
प्रमदाः समदाश्च यौवनाढ्याः स्तनभारनमिताः सलीलयाताः॥१४
विषमुग्रमपीह कालकूटप्रतिमं संहृतिकर्म कर्मठञ्च यत् ।
अमृतं भवति ध्रुवं तदेतद्दधतस्त्रैपुरयन्त्रराजमेनम् ॥१५॥
दहनस्तुहिनत्यसौ दवान्तर्विततोर्द्धीकृतभूरिलोलकीलः ।
धृतयन्त्रवरस्य देहभाजः पयसाम्बापि निधिः स्थलायतेऽयम् ॥१६॥

हृत्पङ्केरुहकर्णिकोपरिदले मन्त्री तु यन्त्राधिपम्
ध्यात्वा शक्तिगमागमं प्रकुरुते धीरः सुषुम्नान्तरे ।
यस्तं शश्वदखण्डपुण्यनिलयं वाक् कामिनी गोमिनी
सामानाधिकरण्यसम्पदतुला नोमुञ्चति क्ष्मातले ॥१७॥

---

चकारः तन्मध्ये इत्यर्थः । तथाच—चकारो मन्दरः प्रोक्तः चकारो मेरुसंज्ञक इति । शिवेन हकारेण वेष्टयेत् । आत्मकृतादिसिद्धिप्राणप्रतिष्ठादिसम्पादितान्तम् । विभुना ब्रह्मणा स्त्रियः कान्तेन विष्णुना प्रसन्नगुरुणा बृहस्पतिना इयं रक्षा धृता ॥ ७—१० ॥

बन्धुरः अमनोरयः गन्धः येषां हस्तिनां महाहस्तिभिरित्यर्थः । तुमुले रणे दुरोदरे द्यूते व्यवहारे लोकव्यवहरणे लुलापो महिषः चित्रकायो व्याघ्रविशेषः द्विपो हस्ती भल्लूको जन्तुविशेषः प्रसिद्धः । एतत् कुलाकुलेषु वनेषु सलीलयाता सलीलं गमनं यस्याः संहृतिकर्म संहृतिकर्मणि मारणकर्मणि कर्मनिपुणं दहनोऽग्निः तुहिनति तुषारस्तुहिनं हिमं हिमवदाचरति । कीदृशो दहनः दवान्तर्विततोर्द्धीकृतपरिलोलकीलः । दवोवनाग्निः तदन्तर्मध्ये वितता विस्तीर्णा ऊर्द्ध्वं कृता च भूरिलोला

आदौ मन्मथकोष्ठकोदरगतं कामाधिराजं लिखेत्
कन्दर्पद्वितयेन चाथ पुटितं कुर्य्यात्तदेतद्द्वयम् ।
धीरोथी मकरध्वजं परिलिखेत् कोणेषु षट् स्वादरा-
न्मध्ये नाम मनोभवस्य सकुलं कुक्षौ तदेतत् क्षिपेत् ॥१८॥
यन्त्रं पूर्व्वोक्तयन्त्राधिपसदृशमिदं चापि मौलौ गले वा
बाहौ वा यो बिभर्त्ति त्रिभुवनमखिलं तद्वशे वर्त्तते च ।
कान्ताः कान्तालकान्ताः पृथुकठिनकुचा नम्रकम्राङ्गयष्ट्यः
कामेनोपद्रवन्त्याकुलितनिजधियस्तं सदोल्लासिचित्ताः ॥१९॥
ध्यात्वैवं मूलचक्रान्तरकमलकुटीकोटरे यन्त्रराजम्
साध्यं सानन्दमन्दं तरुणतरणिभाभास्वराङ्गञ्च तच्च ।
यन्त्रान्तः सुस्थसाध्यामलरुचिविलसच्चेतनामात्ररूपम्
दृष्टोऽवष्टभ्य मन्त्री मथनमथशरैराचरेदात्मशक्त्या ॥२०॥
भवत्यवश्यं मथनेन वश्यः साध्यः सदा साधकपुङ्गवस्य ।
त्रिःसप्तरात्रेण महानुभावो देवोऽपि मर्त्त्यः किमु मन्दवीर्य्यः २१

---

चञ्चला कीला ज्वाला येन सः । वह्नेर्द्वयोर्ज्वालकीला वर्चिर्हेतिः शिखास्त्रियामित्यमरः । हृत्पद्मे भूकर्णिकोपरि हृदयकमलकर्णिकामध्ये यन्त्रराजं ध्यात्वा मूलविद्या जपन् मूलाधारात् कुण्डलिनीं चिन्मयीं शक्तिमुत्थाप्य ब्रह्मनाड्या द्वादशान्तं नीत्वा तदन्तर्गतया सूत्रधारया अभिषिच्यमानं मूलाधारं नयेत् एवं पुनः पुनरभ्यासात् वाक्कामिनी सरस्वती गोमिनी लक्ष्मीः एकाधिकरणे सम्यत् यस्याः सा एवम्भूता तं पुरुषं न मुञ्चति ॥ ११—१७ ॥

यन्त्रान्तरमाह आदाविति । आदौ कामबीजस्यादौ त्रिकोणमध्ये कामबीजं क्लीङ्कारं लिखेत् । तत्त्रिकोणं कन्दर्पान्वितेन षट्कोणाकारेण वेष्टयेत् । षट्कोणेषु मकरध्वजाद्यं द्रूङ्कारं लिखेत् । एतत् सर्वं मनोभवाद्येन स्त्रौँकारेण वेष्टयेत् । मनोभवस्य कुक्षौ मनोभवबीजमध्ये साध्यसाधकनाम लिखेत् ॥ १८ ॥ १९ ॥

साध्यस्य मूलाधारे कमलकर्णिकामध्ये इदं कामबीजयन्त्रं ध्यात्वा साध्यं तन्मध्ये बालदिवाकरसङ्काशम् आनन्दमन्दं चेतनामात्ररूपं ध्यात्वा देशिकोपदेश-

कलापत्रोपेतं कमलमभिसंलिख्य सुमना-
स्तदन्तः शृङ्गाटद्वितयमपि चान्योन्यपुटितम् ।
लिखेन्मध्ये देवीहृदयमथ कोणेषु मदनान्
तदन्तः षट्स्वाख्यां समभिमतसाध्यस्य मतिमान् ॥२२॥
स्वरान् पत्रेष्वे तच्छुषिरजठरान्तः परिलिखे-
ज्जगत्यस्मिन् यन्त्रं प्रथितमिह यन्त्रामृतमिति ।
जनस्यैतद्यन्त्रं वरकमलपट्टेषु विहितम्
जगत् सर्वं शश्वद् भवति वशवर्त्तीह वहतः ॥ २३ ॥

इति त्रिपुरासारसमुच्चये सप्तमः पटलः ।

---

## अष्टमः पटलः ।

अथ त्रिलोकार्चितशासनाया वक्ष्यामि वाह्यार्चनमम्बिकायाः ।
यदर्चनीयत्वमुपैति कुर्वन्नुर्वीतले सर्वजनैर्मनुष्यः ॥ १ ॥

---

क्रमेण स्वशक्त्या मथनं कुर्यादित्याह ध्यात्वैवमित्यादि । आत्मशक्त्या कुण्डलिन्या मथनवायुसञ्चारयोगादमृतोत्प्लावनम् आचरेत् । दक्षिणवर्त्मना इति केचित् । तच्चिन्त्यम् ॥ २० ॥ २१ ॥

मन्त्रान्तरमाह । कलापत्रं षोड़शदलात्मकं पद्मं विलिख्य तत्कर्णिकायां शृङ्गाट-द्वितीयात्मकं षट्कोणं विलिख्य तन्मध्ये देवीहृदयं ओं क्लीं नमः इति यन्त्रं लिखेत् । षट्कोणेषु पञ्चसु कामञ्च क्लीं क्लीं ऐं ब्लूं स्त्रीं इति विलिख्य अन्तिमकोणे आत्याम् अभिमतसाध्यनाम लिखेत् । षोडशदलेषु स्वररूपान् षोडशस्वरान् सविन्दुकान् लिखेत् । शुषिरजठरान्तः प्रविलिखेत् । शुषिरजठरे त्वचोदरे क्षिपेत् । एतद्यन्त्रं वहतो जनस्य जगद्वशवर्त्ती भवति इह संसारे ॥ २२ । २३ ॥

इति त्रिपुरासारटीकायां पदार्थादर्शे सप्तमः पटलः ।

---

एवं यन्त्ररचनाकथनानन्तरं वाह्यपूजाविधानं वक्तुमुपक्रमते अथेति । यदिति

शुद्धे मनोज्ञे पशुदृष्टिपातविवर्जिते भूमिगृहे गृहे वा ।
पूर्वोक्तमार्गेण कृतात्मशुद्धि: स्थानस्य शुद्धिं विदधीत पश्चात् ॥२॥
भगत: परमास्यपूर्वयुक्तं गगनं सानलवामदृक् तथैव ।
कुशतोयसमुक्षणात् क्षमेयं मनुनानेन विशुध्यति समन्तात् ॥३॥
अकुलं सकुलादितर्कबीजं शिवपूर्वेण युतं सहेन्दुखण्डम् ।
असुना मनुना समाहितात्मा तनुयाद् द्रव्यसमुक्षणं कुशाद्भि: ॥४
पुष्करं शिवमुखादिसंयुतं पात्रशुद्धिमनुरेष कीर्त्तित: ।
क्षालयेदमलवारिभिस्तत: पात्रजालममुनैव मानव: ॥ ५ ॥
विलिम्पेत्तत: पीठमम्भोविधौतं स्वयम्भूतपुष्पेन्दुकस्तूरिकाभि: ।
सकाश्मीरगोरोचनाभि: समन्ताल्लिखेदत्र यन्त्रं ततो वक्ष्यमाणम्
॥ ६ ॥

त्रिकोणं विलिख्यानुवृत्तं दलानाम्
तत: पञ्चकं तद्बहिश्चापि वृत्तम् ।

---

यत् कुर्वन्नर: सर्वजनैरर्चनं यन्त्रमुपैति प्रथमं स्नानादिनात्मशुद्धिं विधाय भूमिगृहे पातालगृहे गौरभ्रे गृहे वा यथा उद्ग्रीविकया केनापि लक्ष्यते ॥ १ ॥

एतादृशे गृहे यागमण्डलं परिकल्प्यानन्तरं जलगोमयाभ्यां शोधयेदित्याह शुद्ध इत्यादिना ॥ २ ॥

भगत: भग एकार: । तत्पर ऐकार:आस्यं विसर्जनीय: । तत्पूर्वयुक्तम् अनुस्वारयुक्तम् । गगनं हकार: अनलो रेफ: वामदृक् ऌकार: तथैव पूर्वोक्तविन्दुरनुवृत्त: । तेन ऐं ह्लीं इति मन्त्रेण कुशतोयसमुक्षणादियं युग्मा पृथिवी अनेन मनुना शुध्यति ॥३॥

द्रव्यशुद्धिमाह । अकुलं हकार: कुलं सकार: । तस्यादितर्काक्षरं तत्प्रातिलोम्येन षष्ठाक्षरं रेफ: शिव ककार: तत्पूर्व ईकार: इन्दुखण्डोविन्दु: तेन क्लीं इति मन्त्रेण द्रव्यशुद्धिं कुर्य्यात् ॥ ४ ॥

पात्रशुद्धिमाह पुष्करमित्यादिना । पुष्करमाकाशं तद्बीजं हकार: शिव ककार: सुखं विसर्जनीय: । तद्वादि: विन्दु: । तेन हुमिति मनुना पात्रशुद्धिं कुर्य्यात् ॥ ५ ॥

स्वयम्भूतादिद्रव्यैर्लिप्ते पीठे यन्त्रं लिखेत् । स्वयम्भूतमित्याद्यनुपादेयत्वान्न लिखितं गुरुमुखादेव ज्ञातव्यम् । त्रिकोणं विलिख्य तद्बाह्ये वृत्तं पञ्चदलानि तद्बहि:

पुनः षड्दलं वाह्यतश्चापि वृत्तम्
लिखेदष्टपत्राणि तद्वाह्यदेशे ॥ ७ ॥
पीठस्योत्तरभागे गुरुपंक्तीः पूजयेद्विधिवत्।
वायव्यदिग्भागादारभ्येशानपर्य्यन्तम् ॥ ८ ॥
आधारशक्तिमासनमूलेऽनन्तञ्च सम्पूज्य कूर्मम्।
तदुपरि पृथिवीमपि गन्धाद्यैः समर्चयेन्मन्त्री ॥९॥
पीठस्याग्नेयादिषु चतुर्षु कोणेषु पूजयेत् क्रमशः।
धर्मादीन् गन्धाद्यैश्चतुरोऽधर्मादिकांस्ततोदिक्षु ॥ १० ॥
पीठस्योपरि सत्त्वरजस्तमसां त्रितयञ्च सम्पूज्य।
तदुपरि पद्मं पद्मे वसुरविशशिमण्डलानि यजेत् ॥११॥
प्रेतं त्रिकोणमध्यगं शशिमण्डलमध्यमे यजेत्तदनु।
तदुपरि शङ्करदयितां हृदयाम्बुजगह्वरात् समावाह्य ॥१२॥
संस्थाप्य सन्निरुध्य सन्निधाप्य च सम्प्रनिरुध्य प्रदर्शयेन्मुद्राम्।

---

वृत्तं तद्वहिः षड्दलं तद्वहिर्वृत्तं तद्वाह्येऽष्टदलं चतुर्द्वारोपेतं च कार्य्यमिति शेषः ॥ ६। ७ ॥

अर्घ्यस्थापनादिप्रसिद्धत्वान्न लिखितं पीठस्योत्तरभागे गुरुपंक्तीः स्वनामभिः पूजयेत्। वायव्यादीशानपर्य्यन्तं प्रह्लादानन्दनाथ-सकलानन्दनाथ-कुमारानन्दनाथ-वशिष्ठानन्दनाथ-शुकानन्दनाथ-विमलानन्दनाथ-व्यालानन्दनाथ-श्रीपादुकां पूजयामीति सर्वत्र योज्यम् ॥ ८ ॥

आसनमूले आधारशक्तिं पूजयेत्। पीठस्य चतुष्कोणेषु अग्नीशाननिर्ऋतिवायुषु धर्मादीन् धर्मज्ञानवैराग्यैश्वर्य्याणि दिक्षु पूर्वपश्चिमदक्षिणोत्तरेषु अधर्मादीन् अधर्माज्ञानावैराग्यानैश्वर्य्यान् सत्त्वादित्रितयम् आदिवीजसहितमित्यर्थः। तदुपरि पद्मं पद्मे वसुरविशशिमण्डलानि प्रणवत्रितयवीजयुक्तानीति अकारोकारमकारवीजानीत्यर्थः। तदुपरि प्रेतं परमसदाशिवं मन्त्रस्तु ह्सौः सदाशिवमहाप्रेतपद्मासनाय नमः। तदुपरि हृदयानन्दशिवां शङ्करदयितां करस्थपुष्पाञ्जलौ विरेचान्तः संस्थापनमुद्रया संस्थाप्य सन्निधिकारिण्या मुद्रया सन्निधाप्य सन्निरोधन-

गुह्याख्यामनुपूजामर्घ्यादि समाचरेद्विधिवत् ॥ १३ ॥
वामे त्रिकोणकोणे पाशाङ्कुशकरां तप्तहेमसङ्काशाम्।
रतिमर्चयेन्मनोहरवेशां पश्चात् स्ववीजेन ॥ १४ ॥
प्रीतिं दक्षिणकोणे निजवीजेनार्चयेच्च शङ्खनिभाम्।
अङ्कुशहस्तां सुमुखीमुज्ज्वलवेशां सुगन्धाद्यैः ॥ १५ ॥
आसीनं कुसुमायुधमग्रे देव्याः समर्चयेन्मन्त्री।
बन्धूककुसुमवर्णं करधृतकोदण्डशरम् ॥ १६ ॥
कामस्य कामवीजं वाग्भवं समुद्दिष्टं रतिवीजम्।
सम्मोहनाख्यमन्त्यं प्रीते र्वीजं तथा प्रोक्तम्।
शरपञ्चकदेवताः स्वमन्त्रैरनुपूज्या दलपञ्चकेषु तेषु ॥ १७ ॥
शशिकाञ्चनसान्ध्यमेघनीलोत्पलमञ्जिष्ठनिभप्रभास्तरुण्यः।
द्राविण्याद्याः क्रमशः सर्वाभरणशोभिताः समदाः।
सव्यकरकलितवाणाः शेषकरैः कृतनमस्काराः ॥ १८ ॥

---

मुद्रया सन्निरुध्य अवगुण्ठनमुद्रयावगुण्ठ्य गुह्याख्यां मुद्रां प्रदर्शयेत्। ततो जीवन्यासः। ततः सकलीकरणम् अग्नीशासुर-वायुकोणेषु पुरतो नेत्रं दिक्षु चास्त्रञ्च पूर्वोक्तषडङ्गमन्त्रैः क्रमेणाभ्यर्च्य षोड़शोपचारैः सम्पूज्य आवरणदेवताः सम्पूजयेत् ॥ ९—१३ ॥

तदेवाह वाम इति। देवीवामे प्रकृतवामभाग इत्यर्थः। तप्तहेमप्रभाम् अतिरमणीयवेशां पाशाङ्कुशकरां रतिं वाग्भववीजेनाभ्यर्चयेत् ॥ १४ ॥

दक्षिणाग्रेण शङ्खनिभामतिसुन्दरवेशां सुमुखीम् अङ्कुशकरां प्रीतिं तृतीयवीजेनाभ्यर्च्य देव्या-अग्रे ऽग्रकोणाग्रे बन्धूककुसुमसङ्काशम् इषुचापधरं कामवीजेनाभ्यर्चयेत् ॥ १५ । १६ ॥

एतेषां वीजमाह। कामस्य कामवीजं वाग्भवं सम्मोहनवीजम् अन्त्यं द्रावणवाणादिपञ्चकान्त्यं स इति ॥ दलपञ्चकेषु शरान् पूर्वादिक्रमेण पूजयेत् ॥ १७ ॥

द्रां द्राविण्यै नमः। क्लीं क्षोभिण्यै नमः। क्लीं वशीकरिण्यै नमः। ब्लूं प्रकाशिन्यै नमः। कर्पूरकनकसान्ध्यमेघेन्द्रनीलमञ्जिष्ठाः तत्प्रभाः सव्यकरकलितवाणाः शेषकरकृतनमस्काराः प्रमदाः क्रमेणाभ्यर्च्याः ॥ १८ ॥

ततो भगाख्यां भगजिह्विकाञ्च देवीं भगाख्यां भगमालिनीञ्च।
यजेद् भगाद्यांञ्च दलेषु षट्सु तथा भगाह्लादिनिकां क्रमेण ॥१९
शरदम्बुदधूम्रसान्ध्यमेघफलिनीरात्रिसुवर्णवर्णतुल्याः।
रुचिराभरणोज्ज्वलास्तरुण्यो मदिरानन्दितमानसा मनोज्ञाः ॥२०

करैः खड्गशूलाहिवेतालदण्डान्
सकुन्तान् निजैर्बिभ्रतीं खेटकञ्च।
परैर्विस्मयं नुः कपालस्य खण्डम्
तनुं दुन्दुभिं नादविन्द्वाख्यमुद्रे ॥ २१ ॥

कथयामि भगादिदेवतानामिह बीजान्यपि वाग्भवं सदण्डम्।
वसुवामदृगिन्दुखण्डयुक्तं कुलपूर्वानलगाम्बरे क्रमेण ॥ २२ ॥
ब्रह्माणीं हंसयानां द्रुतकनकनिभामब्धिवक्त्रां त्रिनेत्राम्
हस्ताब्जैर्ब्रह्मकूर्चं कमलमपि लसत्कुण्डमक्षाक्षमालाम्।
बिभ्राणां चारुवेशामथ हरिहयदिक्पत्रमूले यजेत्ताम्
गन्धाद्यैर्बन्धुराङ्गीं वहति वरजटाजूटभारं सदा या ॥ २३ ॥

---

ततो भगादिदेवताः पूजयेत्। ऐं श्रीं क्लीं भगायै नमः। ऐं श्रीं क्लीं भगजिह्विकायै नमः। ऐं श्रीं क्लीं भगाह्लादिन्यै नमः। यथोपदिष्टाः सायुधकरा भव्रनधराः पूर्वनैर्ऋतवायव्याग्नेयपशुपतिवारुणेषु क्रमेणाभ्यर्च्याः ॥ १९ ॥

फलिनी प्रियङ्गुः रात्रिर्हरिद्रा क्रमेण क्रमेण द्वे द्वे अस्त्रे दधती प्रथमायाः शूलखड्गौ द्वितीयाया अहिवेतालदण्डौ कुन्तखेटकौ तोमरविस्मयमुद्रे नरखण्डकपालतनुदुन्दुभिनादविन्दुमुद्रे ॥ २० । २१ ॥

एतासां बीजमाह। वाग्भवं ऐकारमात्रं सदण्डं कुलपूर्वानलगः कुलं दकारः तत्प्रातिलोम्येन अनलगं तृतीयमक्षरं शकारः। अम्बरं हकारः शकारहकारौ रेफेकारविन्दुयुक्तौ तेन ऐं श्रीं क्लीं बीजत्रयात्मकेन मन्त्रेण भगादिदेवताः पूजयेत् ॥ २२ ॥

ततो देवीपूर्वादिदलेषु ब्रह्माण्याद्यष्टशक्तयः पूज्या इत्याह ब्रह्माणीमित्यादि ब्रह्मकूर्चम्। कुशमयब्राह्मणः हरिहयदिक्पत्रमूले पूर्वदले ॥ २३ ॥

माहेशीं तां कपालोज्ज्वलडमरुवराभीतिशूलोरुटङ्कान्
बिभ्राणां बाहुदण्डैर्निविड़हिमनिभामग्निदिक्पत्रमूले ।
नेत्रैरुद्भासमानां त्रिभिररुणजटाकोटिबद्धेन्दुखण्डाम्
गन्धाद्यैः पूजयेत्तां वृषभमुडुर्निभं या समारुह्य याति ॥ २४ ॥
कौमारीं यौवनाढ्यां सुरुचिरवदनां कुङ्कुमाभां सुशोभाम्
शक्तिं पाशाङ्कुशौ या वहति निजकरैर्दक्षिणे चाभयञ्च ।
हालालोलां विशालामलनयनयुगामर्चयेद् गन्धपुष्पैः
सर्वालङ्कारयुक्तां शिखिनि यमदिशां पत्रमूले निषण्णाम् ॥२५॥
रक्षोदिक्पत्रमूले सजलजलधरश्यामलाङ्गीं सुकेशीम्
घण्टां कम्बुं कपालं रथचरणमथो बिभ्रतीं बाहुदण्डैः ।
आसीनां वैनतेये मणिमयमुकुटोद्भासितां वैष्णवीं ताम्
गन्धाद्यैरर्चयेत्तां मधुमदमुदितां नित्यमालोलदृष्टिम् ॥ २६ ॥
वाराहीं खेटकास्युद्भटहलमुषलान् बिभ्रतीं पोत्रिवक्त्राम्
पाश्चात्ये पत्रमूले मणिमयविलसत्कुण्डलोद्घुष्टगण्डाम् ।
या शश्वद्विश्वपूज्या गिरिशिखरखरा (धरा)भीमकोले निषण्णा
गन्धाद्यैरर्चयेत्तां सुरुचिरवदनां धूमधूम्राङ्गकान्तिम् ॥ २७ ॥
इन्द्राणीं चन्द्रबिम्बप्रतिमनिजमुखीमिन्द्रनीलाभवर्णाम्
कर्णान्ताक्रान्तनेत्रां मणिमयमुकुटां वायुदिक्पत्रमूले ।

---

अग्निदले माहेशीं पूजयेत्। कीदृशीं कपालोत्तमडमरुवराभीमशूलोरुटङ्कान् कपालं नरशिरःखर्परम् उत्तमम् उद्भटं सडमरुवरं डमरुश्रेष्ठम् आभीमं भयानकं शूलम् उरु महत् टङ्कः पाषाणदारणः। एतान् बिभ्राणां धारयन्तीम् ॥२४॥

याम्ये कौमारीं शिखिनि मयूरे निषण्णाम् ॥ २५ ॥

नैर्ऋते वैष्णवीम् ॥ २६ ॥

पश्चिमे वाराहीं कीदृशीं गिरिशिखर इव शिखरः स चासौ खरः प्रखरः आभीमो भयानकश्च कोलः शूकरस्तस्मिन्निषण्णां धूमेति अतिशयधूम्रवर्णाम् ॥२७॥

चापं कम्बुञ्च वज्रं शरमपि दधतीं हस्तपद्मैश्चतुर्भिः
स्वर्मातङ्गे निषण्णां सुरवरविनुतामर्चयेन्नित्यमत्ताम् ॥ २८ ॥
चामुण्डां चण्डहासोद्भटविकटरदां भीमवक्त्रां त्रिनेत्राम्
खड्गं शूलं कपालं निजकरकमलैर्बिभ्रतीं खेटकञ्च ।
निर्मांसां रक्तनेत्रां त्रिभुवनभयदां सौम्यदिक्पत्रमूले
कालीं कङ्कालभूषां पितृवननिलयामर्चयेदूर्द्ध्वकेशाम् ॥ २९ ॥
पश्चादाश्चर्य्यरूपां सुरुचिरवदनां शुद्धजाम्बूनदाभाम्
हस्ताब्जैरक्षसूत्राभयकमललसन्मातुलुङ्गीफलानि ।
बिभ्राणामर्चयेत्तां त्रिभुवनजनताभ्यर्चितां लक्षणाढ्याम्
लक्ष्मीमुत्तुङ्गपीनस्तनभरनमितामीशदिक्पत्रमूले ॥ ३० ॥
वीजान्यमूषामथ वच्म्यनन्तो दीर्घं नभोऽन्त्यं नयनान्तमिन्द्रः ।
प्रांशुर्द्दृगन्तान्तपरं कुलान्तमनन्तरुद्रेण ततः समेतम् ॥ ३१ ॥
तिथीशः सानन्तो भृगुरथ हरोऽनन्तसहितो
वकान्तो भौतीशस्तदनु च वकोऽनन्तसहितः ।

---

वायौ इन्द्राणी स्वर्मातङ्गे ऐरावते च युक्ताम् ॥ २८ ॥

कौवेरे चामुण्डां कीदृशीं चण्डहासोद्भटविकटरदां चण्डहासेन उद्भटा उग्रा विकटा भयङ्करा रदा दन्ता यस्याः तां पितृवनं श्मशानम् ॥ २९ ॥

ईशाने लक्ष्मीं पूजयेत् । जाम्बूनदाभां सुवर्णवर्णाभामित्यर्थः ॥ ३० ॥

आसां वीजान्याह । अनन्तः आकारः नभो हकारः अन्त्यः क्षकारः सदीर्घम् आकारेण युक्तं तेन ह्रां क्षां इति ब्रह्माणीवीजद्वयम् । नयनान्तमीकारः इन्द्रो लकारः प्रांशुः आकारः तद्युक्तं तेन ईं लां माहेश्वरीमनुः । दृक् उकारः तत्परम् ऊकारः तत्परं मकारः । कुलं सकारः तदन्तो हकारः अनन्तेन आकारेण रुद्रेण रेफेण च समेतः तेन ऊँ ह्रां कौमारीवीजमुखम् ॥ ३१ ॥

तिथीशः ऋकारः सानन्तः साकारः भृगुः सकारः तेन ऋँ सां वैष्णवीमन्त्रः । हरो हकारः वकः शकारः तदन्तः षः तेन ह्रां षां वाराहीमन्त्रः । भौतीशः ऐकारः वकः शकारः अनन्तः आकारः तत्सहितः तेन ऐँ शां इन्द्राणीमन्त्रः । को विन्दुः तत्पू

कपूर्वं सूक्ष्मान्तान्वितमथ वनं चानु वदनम्
शचीनाथोपेतं गगनमपि कान्तान्वितमथ ॥ ३२ ॥

अथासिताङ्गं रुरुचण्डसंज्ञौ क्रोधीशमुन्मत्तकपालिनौ च।
पत्राग्रमध्येष्वपि भीषणाख्यं संहारसंज्ञञ्च यजेत् क्रमेण ॥ ३३ ॥

दधतोऽञ्जनमेघपुञ्जवर्णानुरुवेतालकपालशूलदण्डान्।
लघुदुन्दुभिसंयुतांस्त्रिनेत्रान् करदण्डैः करिहस्तदण्डचण्डैः ॥ ३४ ॥

गजकृत्तिनिकृत्तितोत्तरीयान् भ्रुकुटीसङ्कटितैर्ललाटपट्टैः।
कुटिलालिकुलाभकुन्तलाग्रान् मुदितान्तःकरणान् सुयौवनाढ्यान्
॥ ३५ ॥

हरात्तृतीयं भगभूतसंयुतं कुलान्तमप्यित्तविलोचनान्तयुक्।
निशाकरार्द्धाङ्कितमस्तकञ्च मयेह तेषामपि वीजमीरितम् ॥ ३६ ॥

यो हेतुको यस्त्रिपुरान्तकाख्यो यो वह्निवेतालहुताशजिह्वौ।
कालः करालश्च तथैकपादो भीमाकृतिर्यः खलु भीमसंज्ञः ॥ ३७ ॥

ततो नीलजीमूतसङ्काशवर्णान्
दलाग्रेषु गन्धादिभिस्तान् क्रमेण।

---

औकारः जल वकारः सूक्ष्मा इकारः स एवान्तो यस्य आकारस्य तेन औँ वां वीजं चामुण्डामन्त्रः। वदनं विसर्जनीयम्। अः अनुवदनम् आकारः शचीनाथोपेतं गगनम् इकारः कान्तान्वितम् अनुस्वारेण युतम् अः क्रीं महालक्ष्मीमन्त्रः ॥ ३२ ॥

पत्रमध्ये अष्टौ भैरवाः सम्पूज्या इत्याह अथेति। असिताङ्गो रुरुश्चण्डः क्रोधीश उन्मत्तकपालिभीषणसंहाराः वेताल[illegible]कपालशूलखड्गडमरुदुन्दुभिहस्तान् चतुर्भुजान् ॥ ३३—३५ ॥

वीजमाह। हरात् तृतीयं ऐं भग एकार तत् भूताक्षरं पञ्चाक्षरम् अनुस्वारं तेन संयुतं तेन ऐं कुली सकारस्तदन्तो हकारः अप्यित्तः औं अग्निः रेफः। विलोचनम् ईकार. तदन्त ऊकारः निशाकरार्द्धो विन्दुस्तदङ्कितमस्तकं तेन ऐँ क्रीं एतेन वीजद्वयेनासिताङ्गान् भैरवान् पूजयेत्। ऐँ क्रीं असिताङ्गाय भैरवाय नम इत्यादि ॥३६॥

ततोऽन्तकादीन् पूजयेदित्याह इति। ऐँ हेतुकाय नम इत्यादिप्रयोगः। हेतु-

त्रिशूलं कपालं स्फुरन्नागपाशम्
तनुं दुन्दुभिं बिभ्रती बाहुदण्डैः ॥ ३८ ॥

दंष्ट्राभीमविशालवक्त्रकुहरान् नेत्रैस्त्रिभिः प्रस्फुर-
द्दन्तांश्च भ्रुकुटीकरालवदनान् कादम्बरीलालसान्।
ऊर्द्ध्वीभूतशिरोरुहान् नववयोयुक्तांश्च भीमाकृतीन्
भौतीशेन निशाकरार्द्धसहितेनाभ्यर्चयेत् साधकः ॥ ३९ ॥

प्रियङ्गुश्यामाङ्गं परिकलितपाणिं मणिमयो-
ल्लसच्चूडापीड़ं द्विरदनवराधिष्ठिततनुम्।
सहस्रं बिभ्राणं नयनकमलानां हरिहयम्
यजेत्तं पूर्वस्यां दिशि कुसुमगन्धादिभिरथ ॥ ४० ॥

अथ विकसितकिंशुकाभमग्निं छगलपतं शितशक्तियुक्तहस्तम्।
मणिमयमुकुटं यजेत् सुगन्धैः कुसुमवरैश्च तरलकुण्डलञ्च ॥४१॥
अर्चयेत्तदनु दक्षिणभागे नीलनीरदनिभं पितृनाथम्।
दण्डहस्तमरुणायतनेत्रं सैरिभाङ्गगतमुज्ज्वलवेशम् ॥ ४२ ॥

नरारूढ़ां रक्षोदिशि विकटदंष्ट्रं सुनियतम्
कृपाणं बिभ्राणं सजलजलदश्यामलतनुम्।
यजेद्वाला[illegible]लं पलचपलमारक्तनयनम्
विचित्रालङ्कारं तदनु विधिवद्राक्षसपतिम् ॥ ४३ ॥

शरदभ्रशशाङ्कनिभं वरुणं मकरस्थितमुज्ज्वलवेशधरम्।
मणिकुण्डलमण्डितगण्डतलम् वरपाशकरञ्च यजेत् स्वदिशि ॥४४
वरसंवरसंस्पृणिशक्तिकरं शुचिकेतनधूमनिभाङ्गरुचिम्।

---

कादित्रिपुरान्तः वह्निर्वेतालः हुताशजिह्वः कालः एकपादः भीमः इत्यष्टौ एतान् चतुर्भुजान् कादम्बरीलालसान् मदिरालालसान् तेषां मन्त्रमाह भौतीशेनेति। भौतीश ऐकारः निशाकरार्द्धसहितेन मार्द्धचन्द्रेण तेन ऐँ ॥ ३७—३९ ॥

तत्राद्यं इन्द्रादयः पूज्या इत्याह प्रियङ्गुश्यामेति। द्विरदनवराधिष्ठिततनुं

निर्जदिश्यनिलं विधिनाथ यजेत् कुसुमप्रमुखैर्मणिहारधरम् ४५

अथोर्णायौ देवं कनकसमवर्णं धनपतिम्
समासीनं यक्षैः परिवृतमशेषैश्च निधिभिः।
गदाहस्तं पिङ्गाक्षकमलयुगं तं सुकुसुमै-
र्यजेद् गन्धैर्धूपैः स्वदिशि लसदाकल्पमपि च ॥ ४६ ॥

ऐशान्यां शशिखण्डमण्डितजटाजूटं त्रिनेत्रं हरम्
सिन्दूरारुणविग्रहं दिशि यजेच्छूलं कपालं सदा।
बिभ्राणं सुभुजैश्चतुर्भिरपरां योगाख्यमुद्रां तथा
भस्मोद्धूलितविग्रहं वृषगतिं गन्धादिभिः साधकः॥ ४७ ॥

मस्तकादिजलराशिगं सकं मस्तकादनलगां वकान्तयुक्।
सूक्ष्मपूर्वमुखपूर्वसंयुतं लोकपालमनुरेष कीर्त्तितः ॥ ४८ ॥

वटुकगणपदुर्गाक्षेत्रपालान् स्वबीजै-
रपि तदनु नमोऽन्तैः साधकेन्द्रः क्रमेण।
मलयजकुसुमाद्यैरर्चयेद् भक्तियुक्तो
हुतवहपिशिताशाधीशवायूशदिक्षु ॥ ४९ ॥

---

द्विरदनवरोहस्त्रिवरः तमधिष्ठिता तनुर्येन तं पितृनाथं यमं संवरणं स्वगं शुचिकेत-नीधूस. तद्वान्नभाङ्गरुचयी यस्य तम् ऊर्णायु मेषः तस्मिन् समासीनं पिङ्गश्च तत् अक्षकमलयुग्मञ्च ॥ ४०—४७ ॥

लोकपालानां मन्त्रमाह मस्तकादीति। मस्तकं विन्दुः अं तत्प्रातिलोम्येन चतुर्थमक्षरम् ऐकारं सक सविन्दुक मस्तकं विन्दुः तस्मादनलगं तृतीयमक्षरं ककारः वकः शकारः तदन्तः षकारः तद्युक्तः ककारः सूक्ष्मा इकारः तत्पूर्वमाकारं मुखं विसर्जनीयं तत्पूर्वं विन्दुः संयुतं सविन्दुकमित्यर्थः। तेन लक्षां समुदायेन ऐं क्षां इति मन्त्रेण इन्द्रादिलोकपालाः पूज्याः॥ ४८ ॥

ततो वटुकगणपतिदुर्गाक्षेत्रपालान् स्वस्वबीजैः अग्निनैर्ऋतवायव्यैशानदिक्षु पूजयेत्। वं वटुकेभ्यो नमः गं गणपतये नमः दुं दुर्गायै नमः इति सम्पूजयेत्। तत्र ऐन्द्रवारुणयाम्यसौम्यदिक्षु अष्टवसुभ्यो नमः। एकादशरुद्रेभ्यो नमः

वसुभ्यो रुद्रेभ्यो दिनपरिवृढ़ेभ्योऽपि च वलिम्
सभूतेभ्यो दद्याद् यजनविधिरित्थं निगदितः ।
असुं कुर्वन्नुर्वीतलमधि बुधो नित्यमपि यः
स सम्पूर्णान् कामान् गिरिश इव सम्प्राप्य रमते ॥ ५० ॥

इति श्रीत्रिपुरासारसमुच्चये सर्वतन्त्रोत्तमोत्तमे अष्टमः पटलः ।

---

## नवमः पटलः ।

अथाग्निकार्य्यं कथयामि पूजागृहस्य कुर्य्याद्दिशि वासवस्य ।
ईशस्य यद्वा दिशि वित्तपस्य विभावसोर्मण्डपमब्धिकोणम् ॥१॥
नवहस्तमात्रमथ शैलदोर्मितं यदि वा हृषीककरसम्मितं मतम् ।
रुचिरैश्चतुर्भिरपरन्ध्रमुन्नतं कुशतोरणैः सितवितानशोभितम् ॥२॥

---

द्वादशादित्येभ्यो नमः इति क्रमेणाभ्यर्च्य ततः परमानन्दामृतसन्दोहस्यन्दनादखण्ड-सवित्स्वरूपिणीं भजमानपारिजातलतिका परमेश्वरीं गन्धपुष्पधूपदीपनैवेद्यान्तैरुप-चारैरभ्यर्च्य सकलभुवनोत्पत्तिविभूतिपरिभूतिमूलीभूतां संहारमुद्रया मण्डलकुसु-मेनाघ्राय हृदयारविन्दमरविन्दं नीत्वा तन्मयमात्मानं परिभाव्य तदनुगृहीतप्रसादः स्वयममृतानन्दमयो भूत्वा वीजमुक्तो यथासुखं विहरेदिति शुभः ॥ ४९ ५० ॥

इति श्रीत्रिपुरासारसमुच्चयटीकायां पदार्थादर्शेऽष्टमः पटलः ।

---

एवमिहलोकसुखसाधनभूतपरदेवतासमवधानकथनानन्तरं होमविधानं वक्तु-मुपक्रमते अथाग्निकार्य्यमिति । नियमश्चाह पूजागृहस्येत्यादि । अयमर्थः वक्ष्य-माणदीक्षामण्डपमध्यस्थवेदिकायाः पूर्वस्यान्दिशि ईशकोणे चासनमपि अग्नौ ईशे अचिरकोणं चतुरस्रात्मकं मण्डलं कुर्य्यात् ॥ १ ॥

अथ दीक्षामण्डपलक्षणमाह नवहस्तमात्रमित्यादि । इन्द्रवारुणयाम्यसौम्यश्च नव-हस्तपरिमितदृढावरणम् । चतुर्द्वारे तोरणोपशोभितं मण्डपं कुर्य्यादिति । ततः शैलदोर्मितमिति शैलाश्च सप्त समाख्याताः सप्तहस्तपरिमितं हृषीकाणि इन्द्रियाणि तानि पञ्चहस्तपरिमितमित्यर्थः ॥ २ ॥

चतुर्द्वारयुक्तं ततस्तस्य मध्ये त्रिधा तद्विभागेन भागैकवेदीम् ।
अरत्निप्रमाणोन्नतां दर्पणान्तर्निभां तां मनोहारिणीं चापि कुर्य्यात्
॥ ३ ॥

वेदास्रं योनिमर्द्धोडुपनिभमनलास्रं च वृत्तं षड़स्रम्
पद्माकारं गजास्रं हरिहयहरिदारभ्य तस्या विदध्यात् ।
मध्ये वृत्तञ्च गौरीपतिसुरपदिशोः पण्डिता केचिदाहु-
र्वायव्ये पञ्चकोणं दिशि मदनरिपोः सप्तकोणञ्च कुण्डम् ॥४॥
प्राक् सूत्रं प्रथमं निधाय विदधीतार्द्धेन तस्याङ्कितम्
मध्ये मत्स्ययुगं दिशोरमलधीः कीनाशवित्तेशयोः ।
ताभ्यां सूत्रमणिं प्रसार्य्य चतुरः कोणांस्ततो लाञ्छयेत्
क्षेत्रं स्याच्चतुरस्रमत्र रचयेदन्यानि कुण्डान्यपि ॥ ५ ॥
क्षेत्रे क्षिप्त्वा वहिरिह पुरोभूतभागेऽंशमेकम्
कोणार्द्धार्द्धं सुनिश्चितमति भ्रामयेत् सम्यगह्य ।

---

वेदिकानिर्माणप्रकारमाह ततस्तस्य मध्य इत्यादिना तन्मण्डपत्रिभागैकेन भागेन वेदिकां कुर्य्यात् यथा प्राक् प्रत्ययसूत्रचतुष्टयेनासकान्या दक्षिणोत्तरा पञ्च तथैव चानयेत् एवं कृते तन्मण्डपं नवपदात्मक जायते तेषु मध्यपदे वेदिकामरत्निमात्रोन्नतां दर्पणान्तर्निभां दर्पणमध्यवन्निर्मलीकुर्य्यात् ॥ ३ ॥

अवशिष्टेषु पूर्वाद्यष्टदिक्पत्रेषु क्रमेण वेदास्रमित्यादि वक्ष्यमाणेन कुर्य्यात्। वेदास्रं चतुरस्रं योनिम् अश्वत्थपत्राकारम् अर्द्धोडुपनिभम् अर्द्धचन्द्राकारम् अनलास्रं त्रिकोणं वृत्तं षडस्रं पद्माकारं गजास्रम् अष्टास्रं हरिहयहरिदारभ्य प्राचीं दिशमारभ्येत्यर्थः । शारदातिलके तु आचार्य्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयोरित्याचार्य्यवृत्तं वर्त्तुलम् । अन्ये त्वेवमाहुः इन्द्रेशानयोर्मध्याद्वृत्तं वायव्ये पञ्चकोणम् ईशकोणे मण्डलकोणं कुर्य्यात् ॥ ४ ॥

कुण्डप्रस्तारमाह प्राक्सूत्रमित्यादिना। प्रथमं प्राक् प्राच्यग्रसूत्रमास्फाल्य तन्मध्याङ्कितं धृत्वा तन्मानेन दिशोर्दक्षिणोत्तरदिक्षु सूत्रचतुष्टयम् आस्फालयेत् । एवं कृते चतुर्हस्तपाटोपेतं समं चतुरस्रं मण्डलं जायते । एतत् कुण्डं पूर्वदिग्गतं भवति एतदेव चतुरस्रम् ॥ ५ ॥

यावत् कोणं परमपि तथा सूत्रयुग्मस्य पातम्
मध्यात् कुर्य्याद् भवति तदिदं मन्मथावासकुण्डम् ॥६॥

परित्यज्य भागद्वयं पङ्क्तिभागो
कृतेऽत्रोपरिष्टादधस्ताच्च विद्वान् ।
परिभ्रामयेत्तेन मानेन सम्यग्
भवेदर्द्धचन्द्राह्वयं कुण्डमेतत् ॥ ७ ॥

शर्वरीसार्द्धभागीकृतक्षेत्रतः पार्श्वयोर्न्यस्य भागद्वयं पण्डितः ।
तेन मानेन सूत्रद्वयं विन्यसेत् कुण्डमेतद्भवेद्रुद्रनेत्रास्त्रम् ॥८॥

दिग्गजादधिकपंक्तिभागतः क्षेत्रतो निश्चितधीर्वहिर्न्यसेत् ।
भागमेकमनेन सर्वतो भ्रामयेद् भवति वृत्तमुत्तमम् ॥ ९ ॥

भूपांशेऽशद्वयमिह वहिः पार्श्वयोर्न्यस्य मध्यात्
क्षेत्रव्यासे सुविमलमतिस्तेन मानेन कृत्वा ।

---

चतुरस्रच्च कृतान्यानि कुण्डान्युद्धरेदित्याह: क्षेत्रे क्षिप्तेति। कृतचतुरस्रे आग्नेयमारुतनैर्ऋतेशच्च सूत्रद्वयम् आस्फाल्य पुनश्चतुरस्रं पञ्चविंतय एकम् अंशं वहिः क्षिप्त्वा कोणार्द्धार्द्धप्रमाणेन सम्पूज्य भ्रामयेत् कोणशब्देन कोणसूत्रं उच्यते। तस्यार्द्धं कोणसूत्रद्वयमध्यसम्पातस्थानं तदर्द्धं पश्चिमकोष्ठयुगले द्वितीयकोणसूत्रस्थानं तत्प्रमाणतः तत्स्थानात् कोणसंलग्नं भ्रामयेत् एतद्योनिकुण्डम् अग्निदिग्गतम् ॥६॥

अर्द्धचन्द्रकुण्डमाह परित्यज्येति। चतुरस्रं कृतं भूभागं दशधा विभज्य अध ऊर्द्ध्वं भागद्वयम् ऊर्द्ध्वं एकम् अध एकं परित्यज्य अग्रे ज्यासूत्रं स्वे स्वे समप्रमाणं पातयित्वा तेन मूले व्यासप्रमाणेन भ्रामयेत्। सूत्रखण्डान्यन्यानि परिमार्जयेत्। एतदर्द्ध-चन्द्राह्वयं कुण्डं दक्षिणदिग्गतम् ॥ ७ ॥

अस्त्रकुण्डमाह शर्वरीति। सार्द्धभागीकृत इति प्रकृतं चतुरस्रं क्षेत्रम् अष्टधा विभज्य पार्श्वयोः तिर्य्यक् प्राचीसूत्रपार्श्वयोः प्रत्येकं भागद्वयं वर्द्धयेत्। सूत्रसकलानि परिमार्जयेत्। ऐन्द्रकोणकुण्डं निर्ऋतिदिग्गतम् ॥ ८ ॥

वृत्तकुण्डमाह दिगिति। क्षेत्रतोऽष्टाधिकदशभागे कृते एवं भागं चतुःपार्श्वे वहिर्न्यस्य वृत्ताकारेण भ्रामयेत्। वृत्तखण्डान्यन्यानि परिवर्जयेत्। एतद्वृत्तकुण्डं पश्चिमदिग्गतम् ॥ ९ ॥

पार्श्वद्वन्द्वे झषयुगयुगं सूत्रषट्कोणपातम्
कुर्य्यात् कुण्डं भवति तदिदं तर्ककोणं मनोज्ञम् ॥१०॥
दशांशेऽत्र विन्यस्य वाह्येऽंशमेकम्
परिभ्राम्य तेनैव वृत्तं दलानाम् ।
वहिर्मध्यमे कर्णिकाञ्चापि कुर्य्याद्
भवेदष्टपत्रं बुधः पद्मकुण्डम् ॥ ११ ॥
क्षेत्रे त्त्विष्वात्र वाह्ये दिशि दिशि मिहिरद्वन्द्वकांशेऽंशमेकम्
कृत्वानेनाब्धिकोणं पुनरपि मतिमान् कोणतोऽर्द्धं गृहीत्वा ।
तत्कोणाभ्यां विदध्यादिह खलु परितस्तेन मानेन चिह्ना-
न्यष्टास्रं स्यात् समन्तादपिच वितनुयादष्टसूत्रप्रयोगम् ॥ १२ ॥
हयांशेऽत्र भागं वहिर्न्यस्य वृत्तं परिभ्राम्य भूयो युगांशीकृतांशैः ।
त्रिभिः पट्टदीर्घं भवेत् पञ्चसूत्रप्रयोगादिहानेन पञ्चास्रकुण्डम्
॥१३॥

---

षड़स्रकुण्डमाह भूपेति । क्षेत्रं दशां भूपांशीकृत्य षोड़शधा कृत्वा मध्यसूत्रात् । पार्श्वमेकैकमेकं विन्यस्य पार्श्वद्वन्द्वे मत्स्यचतुष्कं ततः षट्सूत्रं पातयेत् । तेन षट्कोणात्मकं कुण्डं भवेत् तद्वायव्यदिग्गतम् ॥ १० ॥

पद्मकुण्डमाह दशांशेति । चतुरस्रं क्षेत्रं दशांशीकृत्य वर्द्धयित्वा वर्त्तुलाकारेण भ्रामयित्वा पुनरपि तेन मानेन भ्रामयित्वा कुण्डात्मकमध्यवृत्तेन कर्णिकाद्वितयवृत्तेन केशराणि तृतीये चाष्टदलानि पद्मकुण्डं कौवेरदिग्गतम् ॥ ११ ॥

अष्टास्रमाह क्षेत्र इति । चतुरस्रं क्षेत्रं मिहिरद्वन्द्वांशं चतुर्विंशांशं विधाय दिशि दिशि एकमेकम् अंशं चिह्वा वर्द्धयित्वा अब्धिकोणं कृत्वा ततः कोणतोऽर्द्धं गृहीत्वा अन्तश्चतुरस्रकोणाद्वार्द्धं गृहीत्वा कोणाभ्यां वाह्यचतुरस्रकोणाभ्यां दिशि दिशि चिह्नानि कृत्वा अष्टसूत्रपातेनाष्टास्रं कुण्डं ईशदिग्गतम् ॥ १२ ॥

पञ्चास्रकुण्डमन्याचार्य्यमतमाह हयांश इति चतुरस्रं सप्तभागं विधाय एकम् अंशं वहिर्वर्त्तुलत्वेन वर्द्धयित्वा पुनरपि युगांशीकृत्य चतुर्द्धा विभज्य त्रिभिरंशैरायामदैर्घ्यं कृत्वा तत्र सूत्रप्रयोगं पञ्चकोणात्मकं कुण्डं वायुकोणगतम् ॥ १३ ॥

वेदव्यासे दशांशैर्बहिरिह विनिधायैकमंशं सुवृत्तम्
मानेनानेन कृत्वा पुनरपिच चतुःषष्टिभागीकृतेऽत्र ।
पट्टायामप्रमाणं दृढ़मतिरमुना सत्रिकैस्त्रिंशदंशैः
कुर्य्यात् सप्तास्त्रकुण्डं भवति हि तदिदं सप्तसूत्रप्रयोगात् ॥१४॥
यावन्मानं कुण्डविस्तारकस्य तावत् खातस्यापि मानं प्रदिष्टम् ।
कुण्डाकारं पण्डितो यादृशं तत् तादृग्रूपं मेखलाया निदध्यात्
॥ १५ ॥
तिस्रः कुण्डे मेखलामेखले द्वे यद्वा चैकां मेखलां वापि कुर्य्यात् ।
कुर्य्यादूर्द्ध्वं मेखलाया गजौष्ठाकारं योनिं चापि होतुर्दिशीह ॥१६
मुष्टिमात्रे तु ता मेखला द्व्यङ्गुलैका-
ङ्गुलार्द्धाङ्गुलोत्सेधताराः क्रमात् स्युः ।
रत्निमात्रे तु तास्त्र्यङ्गुलद्व्यङ्गुलैका-
ङ्गुलोत्सेधतारा भवेयुः पुनस्ताः ॥ १७ ॥
युगाग्नित्तनेत्राङ्गुलोत्सेधताराः स्युरेताः क्रमाद्धस्तमात्रेऽत्र कुण्डे ।
करद्वन्द्वमात्रे रसाम्भोधिवह्न्यङ्गुलोत्सेधतारा भवेयुः पुनस्ताः ॥१८
वेदकरेऽस्मिन् सिन्धुरतर्काब्ध्यङ्गुलतारोत्सेधयुताः स्युः ।
षट्करमात्रेऽस्मिन् दशवसुत्र्यङ्गुलतारोत्सेधसमेताः ॥ १९ ॥
भास्करपंक्तिगजाङ्गुलतारोत्सेधयुताः स्युरिमा वसुहस्ते ।
नाभिमिहाम्बुजवच्च विदध्यादष्टदलं सह कर्णिकयान्तः ॥२०॥

---

सप्तास्त्रकुण्डमाह वेदव्यास इति। अत्र व्यासप्रकृतं चतुरस्रं दशधा विभज्य एकांशेन बहिर्वर्द्धयित्वा पुनस्तेनैव मानेन परितो वृत्तं भ्रामयेत्। पुनरपि चतुरस्रं चतुःषष्टधा विभज्य तेष्वेकत्रिंशदंशं परित्यज्य अवशिष्टेन त्रयस्त्रिंशदंशेन वृत्तरेखा सप्तधा प्रणीय सप्तचिह्नानि कृत्वा सप्तसूत्राण्यास्फालयेत्। एवं सप्तकोणम् असङ्कुचिताग्रं कुर्य्यादिति ॥ १४ ॥

खातमानमाह यावदिति। युगं चत्वारि अग्निः त्र्यङ्गुल नेत्रं द्व्यङ्गुलं सिन्धु-वाचौ तर्काः षट् अब्धयश्चत्वारः। नाभिप्रसरमाह नाभिमिहेति॥ अन्तः कुण्डमध्ये

मुष्टिमात्रे रसाम्भोधिनेत्राङ्गुलायामतारोन्नतिर्योनिरुक्ता बुधैः ।
नेत्रवेदाङ्गुलोत्सेधतारान्विता नाभिरप्यत्र योन्यग्रमेकाङ्गुलम् २१

योव्यामितन्नदितं रत्निमात्रस्य कुण्डस्य ।
यन्मयोक्तं तदेव खलु हस्तमात्रस्य ॥ २२ ॥

एकैकेनाङ्गुलीनामलनिमितमतिर्वर्द्धयेदन्यकुण्डे-
ष्वेनां योनिञ्च नाभिं खलु यवयुगलेनेह योन्यास्तथाग्रम् ।
कुर्य्यान्नाभिञ्च वृत्ताकृतिमपि यदि वा कुण्डरूपस्वरूपम्
योन्याकारेऽत्र योनिं सरसिजसदृशे नो विदध्याच्च नाभिम् ॥२३॥

कुण्डस्यैके हस्तमात्रस्य योनिं प्राहुर्भूताग्न्यङ्गुलायामताराम् ।
व्यासस्यैकांशकोत्सेधयुक्तां कुर्य्याद् बोधिच्छ्याजपत्रानुरूपाम् ॥२४॥

नेत्रभूताङ्गुलोत्सेधतारान्वितां नाभिमंशद्वये तद्दलानि ।
व्यासवह्न्यंशतोऽंशेन तत्कर्णिकां मध्यभागे विदध्याद्बुधः कुण्डतः२५

कुण्डस्यैककरस्य चारु परितो नेमिर्भवेदङ्गुले-
नैकेनैव ततो विलोचनकरादारभ्य संवर्द्धयेत् ।
कुण्डे दिक्करकुण्डकावधि बुधः प्रत्येकमर्द्धाङ्गुलम्
तद्वाह्ये खलु मेखलात्रितयकं कुर्य्याद्यथोक्तक्रमात् ॥ २६ ॥

---

योनिप्रकारमाह मुष्टीति । दैर्घ्यरणविस्तारः नेतरः षट्चतुर्द्व्यङ्गुलायाम. यथा-संख्यम् । नाभिमानमाह नेत्रेति । योन्यग्रमाह योन्यग्रमिति योनिकुण्डे योनिं पद्मकुण्डे नाभिञ्चाविहिते इत्याह इत्येकाङ्गुल इत्यादि विदध्याच्च नाभिमित्यन्तेन च । कुण्डस्येति एके आगमविदः हस्तपरिमितकुण्डस्य योनिमानम् अन्यथा वर्ण-यन्ति भूत-अग्नि-अङ्गुलायामताराम् । व्यासः आयामः तस्मिन् आयामे तां षट्-संख्यां षडङ्गुलां बोधिच्छ्याजपत्रानुरूपाम् अश्वत्थपत्राकाराम् एतदुक्तं भवति । एक-हस्तमात्रस्य षडङ्गुलविस्तृतां द्व्यङ्गुलीन्नतामश्वत्थपत्रवत् ॥ १५—२४ ॥

नेत्रेति । द्व्यङ्गुलपञ्चाङ्गुलैरुत्सेधतारान्वितां कुर्य्यात् । भागद्वयेऽष्टदलानि च व्यासस्य विस्तारस्य वह्न्यंशभागेन तृतीयभागेन मध्यकुण्डे कर्णिकां कुर्य्यात् । एक-हस्तकुण्डस्य परितः सर्वत्र एकेन अंशेन अनेन नेमिः एवं विलोचनात् द्विकरादारभ्य

शताद्र्धहोमे खलु मुष्टिमात्रमरत्निमात्रं शतहोमकुण्डम् ।
हस्तं सहस्रे त्वयुते द्विहस्तं लक्षे चतुर्हस्तमिदं प्रदिष्टम् ॥ २७ ॥
दशलक्षे रसहस्तं वसुहस्तं कोटिहोमे स्यात् ।
कोट्यर्द्धे चाष्टकरं होमिष्वागमविदो ब्रुवते ॥ २८ ॥
केचिद्धस्तं लक्षहोमे द्विहस्तं लक्षद्वन्द्वे वाङ्किलक्षे त्रिहस्तम् ।
होमे कुण्डं वेदलक्षेऽब्धिहस्तं प्राहुर्दोष्णां पञ्चकं पञ्चलक्षे ॥२९॥
षड्लक्षे वसुहस्तं सप्तकरं सप्तलक्षे स्यात् ।
वसुहस्तं वसुलक्षे नवलक्षे नवहस्तम् ॥ ३० ॥
दशहस्तं दशलक्षे दशकरमेवेह कोटिहोमेऽपि ।
दशहस्तान्नहि कुण्डं परमस्ति महीतलेऽमुष्मिन् ॥ ३१ ॥
सर्वसिद्धिकरमम्बुधिकोणं पुत्रदं मनसिजालयमथोक्तम् ।
अर्द्धचन्द्रसदृशं शुभदं स्यादग्निकोणमरिमर्दनहेतुः ॥ ३२ ॥
शान्तिकर्मणि भवेत् सुवर्त्तुलं छेदमारणकरं षडस्रकम् ।
पद्मकुण्डमिह वृष्टिकारकं रोगशान्तिकरमष्टकोणकम् ॥ ३३ ॥
चतुरस्रं विप्राणां राज्ञामिह वर्त्तुलं कुण्डम् ।
वणिजामर्द्धशशाङ्काकारं त्र्यस्रं तु शूद्राणाम् ॥ ३४ ॥
चतुरस्रं सर्वेषां प्रशस्तमिति केचिदाहुराचार्य्याः ।
वाञ्छितफलदं यज्ञकुण्डं द्वयमपि भुक्तिमुक्तिकरम् ॥ ३५ ॥
षट्कोणमर्द्धचन्द्राकारञ्चापि प्रजाकरकुण्डम् ।

---

वर्द्धयेत् । एवं द्विकरकुण्डावधि दशहस्तकुण्डपर्य्यन्तं प्रत्येकम् अङ्गाङ्गुलं न वर्द्धयेत् । तदाङ्गे खलु मेखलावितयं कुर्य्यात् ॥ २५ ॥ २६ ॥

होमसंख्यानुरूपकुण्डमाह शतार्द्धेति । त्रिहस्तमयुते त्रिहस्तं हस्तकुण्डकोणसूत्रपरिमितं तथाच सूत्रप्रमाणेन द्विहस्तकुण्डमुद्धरेत् । एकहस्तस्य कुण्डस्य कर्णसूत्रप्रमाणतः । त्रिहस्तमुद्धरेत् कुण्डमेवं तत्त्वविदो विदुः ॥ २७—३१ ॥

मुक्तिकरं पञ्चास्रं हयकोणञ्चेह राज्यदा योनिः ॥ २६ ॥

इति श्रीत्रिपुरासारसमुच्चये नवमः पटलः ।

---

## दशमः पटलः ।

नित्ये नैमित्तिके च प्रविमलमतयः प्राहुरेकेऽब्धिकोणम्
कुण्डं हस्तप्रमाणं स्मरगृहसदृशं चाथ वृत्तं प्रशस्तम् ।
षट्कोणं चार्द्धदोषाकरसदृशमथ स्थण्डिलं रत्निमात्रा-
यामं चाङ्गुष्ठपर्वोन्वितमपि सुषमं निर्मितं वालुकाभिः ॥ १ ॥

चतुष्कोणमब्ध्यङ्गुलोत्सेधमेके
बुधा हस्तविस्तारयुक्तं तदाहुः ।
ततः शोधनं चालनं चापि कुर्या-
त्तथा प्लावनं चापि कुण्डस्य विद्वान् ॥ २ ॥

तिस्रस्तत्र लिखेदुदग्गतशिखारेखाहृदा बर्हिषा
प्रागग्राश्च तथा चतुर्मुखयमश्यामाकरा देवताः ।
तासां वृत्ररिपोर्हरिद्गतशिखायामध्यसव्योत्तराः

---

काम्यविशेषे कुण्डविशेषमाह सर्वसिद्धिकरमिति । मनसिजकरसंख्यातयोनि-कुण्डं जातिविशेषे कुण्डविशेषमाह चतुरस्रमिति ॥ २२—२६ ॥

इति श्रीत्रिपुरासारसमुच्चयटीकायां पदार्थादर्शे नवमः पटलः ॥ ९ ॥

---

एवं मण्डपकुण्डविधानानन्तरं स्थण्डिलविधानं होमविधानञ्च वक्तुमुपक्रमते नित्येत्यादिना । नित्ये नैमित्तिके हस्तप्रमाणं कुण्डमाचार्य्याः प्राहुः । वालुकानिर्मित-स्थण्डिलप्रमाणमाह स्थण्डिलमिति ॥ १ ॥

कुण्डशोधनप्रकारमाह तत इति, कुण्डं स्थण्डिलं च कृत्वा नखकेशलोष्ट्राश्मादीन् संशोध्य गोमयाम्भसा कुण्डमुपलिप्य स्थण्डिलं चाभ्युक्ष्य वायुवीजेन सशोध्य वरुणवीजेनाप्लावनं कृत्वा हृदा हृदयमन्त्रेण नम इति मन्त्रेण वर्हिषा द्विगु-णितकुशेन दक्षिणाग्रं पश्चिमादिपूर्वाग्रक्रमेण रेखात्रयं विलिख्य तासां दक्षिणा-

श्रीशाद्दीशसुराधिपा इति तथा प्रागग्ररेखाधिपाः ॥ ३ ॥
अभ्युक्ष्य मूलेनाम्भोभिर्गन्धाद्यैस्तस्य मध्यमभ्यर्च्य ।
इह नीलनीरदाभां ध्यायेद्वागीश्वरीमृतुस्नाताम् ॥ ४ ॥
जातं मार्त्तण्डकान्ताद्धुतवहमरणेः श्रोत्रियागारतो वा
क्षेत्रान्निक्षिप्य पात्रे वरकनकमये ताम्रपात्रेऽथवापि ।
मृत्पात्रे वा निधायामलविपुलमतिर्वह्निवीजेन मन्त्री
क्रव्यादांशं त्यजंस्तत्तदनु च मनुना शोधयेदस्त्रकेण ॥ ५ ॥
कवचेन ततोऽवगुण्ठ्य पश्चाद् यतात्मा परिदर्श्य धेनुमुद्राम् ।
अमृतीकरणं ततो विदध्याज्जलवीजेन सविन्दुना कृशानोः ॥६॥
प्रादक्षिण्यात्त्रिः परिभ्राम्य सम्यग्-
वागीश्वर्याः कुण्डमध्ये स्थितायाः ।
योनावेनं विन्यसेत् स्वाभिवक्त्रम्
पश्चादग्निं मूलमन्त्रेण मन्त्री ॥ ७ ॥

---

दुत्तराग्रेषु मध्यपश्चिमपूर्वभागगतानां क्रमेण ब्रह्मयमसोमाः पश्चिमादिपूर्वाग्रेषु मध्य-दक्षिणोत्तराणां दिशः श्रीशसुराधिपादेवताः स्मरेत् ततो दक्षिणभागेन गन्धपुष्पा-क्षतादीनि होमद्रव्याणि संस्थाप्य वामभागे पूर्वाग्रान् दर्भानास्तीर्य्य तदुपरि यथोक्त-निपातान् तीर्थजलेनापूर्य्य पूर्वोक्तद्रव्यजातम् । पात्राणि च पूर्वोक्तमन्त्रेण सम्प्रोक्ष्य कुण्डस्थण्डिलयोरन्यतमे मध्ये गन्धादिभिरभ्यर्च्य ॥ २ ॥ ३ ॥

वागीश्वरीमृतुस्नातां वागीश्वरेण संयुक्तां द्विभुजाम् उत्पलधारिणीमिति ध्यात्वा ॥ ४ ॥

सूर्य्यकान्तसम्भवं अरणेः श्रोत्रियगेहाद्वा एकमग्निमानीय वह्निवीजेन पात्रे निधाय क्रव्यादने किञ्चिद्दारुखण्डं परित्यज्य अस्त्रेण सञ्छाद्य ॥ ५ ॥

कवचेनावगुण्ठ्य अमृतवीजेन धेनुमुद्रया अमृतीकृत्य उत्थाप्य प्रादक्षिण्यक्रमेण स्थण्डिलकुण्डं परिभ्राम्य स्वसम्मुखं कृत्वा । स्ववीजबुद्ध्या कुण्डमध्ये देव्या योनौ तत् समर्पयेत् ॥ ६ ॥ ७ ॥

हृन्मन्त्रेण समाहितोऽथ जुहुयादाज्येन सप्ताहुतीर्-
गर्भाधानमिदं सितेतरगतेः सम्यक् कृतं स्यादिह ।
एवं पुंसवनं ततो वितनुयान्मन्त्री तु सीमन्तकम्
तेनैवास्य तु जातकर्मविधिना वह्नेर्विदध्यादिह ॥ ८ ॥

ततः सप्तहस्तं त्रिपादं द्विशीर्षं चतुर्भिर्विषाणैस्त्रिधाबद्धमिद्धम् ।
पिशङ्गैर्युतं लोचनैस्तर्कसंख्यैर्विनाशं रणन्तं चतुःश्रोत्रमग्निम् ॥९॥
रक्ताम्बुजास्थं परिसम्बितैकपादञ्च पृष्ठेन गतं वृषेन्द्रम् ।
स्वसम्मुखं दक्षिणगैश्चतुर्भिर्वामैस्त्रिभिर्बाहुभिरप्युपेतम् ॥ १० ॥
शक्तिं स्रुवं स्रुक्स्रुवौ सव्यहस्तैर्वामैर्हस्तैस्तोमरं तालवृन्तम् ।
सर्पिः पूर्णं तप्तसौवर्णवर्णं पात्रं स्वाञ्च सप्तजिह्वां दधानम् ॥११॥
या सा हिरण्या कनका च रक्ता कृष्टा च सव्याननगा रसज्ञा ।
या सुप्रभाख्या रसनातिरक्ता वामाननस्था बहुरूपिका च ॥१२॥

---

तत्र योगपीठमभ्यर्च्य पश्चाद्देवस्य देव्याश्च दद्यादाचमनादिकम् । ज्वालयेन्मनुनानेन तमग्निमथ देशिकः । ओं चित् पिङ्गल हन हन दह दह पच पच सर्वाज्ञानि ज्ञापय स्वाहा । अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णममलं समिद्धं सर्वतो मुखम् । उपतिष्ठेत विधिना मनुनानेन पावकम् । बिन्दुसदात्मनी देहे मन्त्रैर्जिह्वाहविर्भुजः । लिङ्गपायुशिरोवक्त्रघ्राणनेत्रेषु सर्वतः । वह्निरघीशसंयुक्ताः सादिवर्णाः सबिन्दवः । तेन स्रूं भ्रुं स्रुं लूं, य्यु-मर्णामन्त्राः समुद्दिष्टा जिह्वायै: सप्तदेशिकैः । पूर्वोक्तहृन्मन्त्रेण गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मणां प्रत्येकं सप्ताहुतीः कृत्वा तत्र गायत्र्यनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगतीच्छन्दोमयसप्तधातुम् ॥ ८ ॥

गार्हपत्याहवनीयदक्षिणाग्निमयं त्रिपादं यजमानं प्रत्यात्मकं द्विशीर्षं चतुःशृङ्गम् । वेदचतुष्टयं चतुःस्कन्धं प्रातर्मध्याह्नसायमिति शवलत्रयबद्धशरीरं वेदालोकाय पञ्चरात्रबीजार्द्धेर्द्धम् । हव्यस्यात्मकं विना पुंसवनत्रयेषु ऋग्यजुःसामाथर्वात्मकं चतुःश्रोत्रं जङ्गमदीप्यमानवपुषं वृषेन्द्रपृष्ठेन गतं वृषेन्द्रस्य पृष्ठगतं तथालम्बितकपालम्, अधः दक्षिणभागैश्चतुर्भुजैः शक्तिं बीज स्रुक्स्रुवौ । वामकरैस्त्रिभिस्तोमरतालवृन्तं तप्तर्णपूसौवर्णपात्रञ्च दधानमित्यादि ॥ ९—११ ॥

सुतप्तचामीकरचारुवर्णा स्थिता हिरण्या दिशि शूलपाणेः ।
वैदूर्य्यवर्णा कनकाभिधाना या सा निषण्णा दिशि वासवस्य ॥ १३

या रक्ता तरुणदिवाकराभवर्णा
सा जिह्वा हरिति सुसंस्थिता कृशानोः ।
या कृष्णा विकसितनीलनीरजाभा
सा रक्षःपरिवृढदिग्विभागलग्ना ॥ १४ ॥

पद्मरागसदृशप्रभोज्ज्वला सुप्रभा वरुणदिग्व्यवस्थिता ।
या महारजतपुष्पसन्निभा गन्धवाहदिशि सातिरक्तिका ॥ १५
यथार्थसंज्ञा बहुरूपिका या जिह्वोत्तरे दक्षिणतः स्थिता सा ।
कुण्डस्य मध्ये त्वथ सा प्रशस्ता जिह्वा हिरण्या भुवि कामनादौ ॥ १६ ॥

स्तम्भनादिषु मता कनकाख्या द्वेषणादिषु मता खलु रक्ता ।
मारणे निगदिता भुवि कृष्णा सुप्रभा बुधवरैरिह शान्त्याम् ॥ १७
उच्चाटनेऽतिरक्ता या बहुरूपोत्तरे त्विषिम् ।
ऋद्धिं दक्षिणतः सा तनुते मध्ये शुभानि सदा ॥ १८ ॥
अन्ये त्वागमपारगामलधियः प्राहुर्बुधाः सुप्रभाम्
ह्यारेः ककुभि स्थितां पितृपतेः कृष्णां हिरण्यां पुनः ।
वारुण्यां बहुरूपिकां पुरभिदो रक्तामुदीच्यां स्थिता-
माग्नेय्यामतिरक्तिकाञ्च कनकां कुण्डस्यमध्ये स्थिताम् ॥ १९ ॥
जिह्वान्तु हिरण्याख्यां शान्तिककर्मणि तथा कनकाख्याम् ।
रक्तां कार्मणकर्मणि कृष्णां क्षुद्रक्रियासु बुधः ॥ २० ॥

---

जातवेदसं ध्यात्वार्घ्यपाद्यादिधूपदीपान्तैरुपचारैरभ्यर्च्य ततः प्रागग्रैरुदगग्रैर्दर्भैरेकमेखलाकुण्डे मेखलाधस्तात्। द्विमेखले द्वयोर्मध्ये त्रिमेखले मेखलायाः परिस्तीर्य यदि स्थण्डिलं तदा दक्षिणोत्तरपश्चिमभागेषु त्रीन् परिधीन् विन्यस्य पवित्रीपच्य ततो गर्भाधानं पुंसवनं सीमन्तोन्नयनं पुनः। अनन्तरं जातकर्म स्यान्नामकरणं तथा।

या सुप्रभेति गदिता तामाहुर्मोचकारिणीं जिह्वाम्।
अतिरक्तामाकृष्टौ बहुरूपामखिलसिद्धिदां जिह्वाम्॥ २१ ॥
सर्वालङ्करणान्वितां सर्वकर्मस्वेवं रूपं साधकश्चित्रभानुम्।
सम्यग्ध्यायेत् सप्तजिह्वाभियुक्तं ज्ञात्वा वाग्यतोत्तानवक्त्रम्॥२२
कुर्यान्मन्त्री जातकर्मावसाने पाद्यार्घ्याद्यैरर्चयित्वा यथावत्।
हृन्मन्त्रेणाज्याहुतीः सप्त कृत्वा श्रीमन्नामामुष्य धूमध्वजस्य॥२३॥
प्रागग्रैरुदगग्रैः परिस्तरेदथ कुशैः सम्यक्।
एकमेखलकुण्डे निश्चितमतिर्मेखलाधस्तात्॥ २४ ॥
परिस्तरेद्द्विमेखले द्वितीयमेखलोपरि।
त्रिमेखले तु मध्यमेखलोपरि परिस्तरेत्॥ २५ ॥
स्थण्डिलके सिकतानामग्रे पार्श्वेऽथ विन्यसेत् परिधीन्।
कुण्डस्य दक्षिणोत्तरपश्चिमभागेषु साधको मतिमान्॥ २६ ॥
होतुः पूर्वं पूर्वभागं प्रदिष्टं सव्यं भागं दक्षिणं भागमग्नेः।
वामं विद्यादुत्तरं भागमग्रं प्रज्ञावद्भिः पश्चिमं भागमुक्तम्॥२७॥

ततो वामभागे परिस्तीर्य दर्भान्
पुलोमात्मजावल्लभाशागताग्रान्।
तदूर्द्ध्वे न्यसेद्द्वन्द्वरूपेण पात्रा-
ण्यधोऽधोगतास्यानि सर्वाणि धीमान्॥ २८ ॥

सौवर्णान्यपि राजतान्यपि तथा पात्राणि शौल्वानि वा
मृत्पात्राण्यपि शान्तिकादिषु परं शस्तानि कर्मस्विह।
शैल्वचद्रुमशिग्रुभूरुहकृतान्येतानि विद्वेषणो-
च्चाटोच्छादनमारणादिषु भृशं शस्तानि पात्राण्यपि॥ २९ ॥

---

उपनिष्क्रमणं पश्चादन्नप्राशनमीरितम्। चौडोपनयने भूयो महानाम्निमहाव्रत-मित्यादि। प्रयोगान्ते मङ्गलनाम्नोऽग्नेर्गर्भाधानं करोमि नमः स्वाहा इत्यादि। यथाच शतं मङ्गलनामानं कुण्डेऽग्निस्थापनं तथेति। उत्तरे सिद्धिमिति दक्षिणतः

अथोत्तानितेष्वेषु पात्रेषु विद्वान्
जलेनैकमापूर्य्य तीर्थानि तत्र ।
सुसञ्चिन्त्य तैः प्रोक्षयेत् कूर्चदर्भै-
स्तदा सव्यभागस्थितं द्रव्यजातम् ॥ ३० ॥

कृतघृतशुद्धिः प्रविमलबुद्धिर्जुहुयादाहुतिसप्तकमत्र ।
अन्नप्राशनमथचूड़ोपनयनयोरपि विदधीतेत्थम् ॥ ३१ ॥

गोदानमङ्गलादिषु सर्वेषु सहृदयेन ।
तेनैव समावर्त्तनविवाहयोराहुतीर्जुहुयात् ॥ ३२ ॥

अस्रूनिति सुसंस्कृते कृशानौ विधिना पूर्वसमीरितासनं तत् ।
परिकल्प्य यथावदर्चयेत्तां परिवारेण सहाम्बिकामथात्र ॥३३॥

परिवारस्यैकैकां देव्याश्च दशाहुतीर्जुहुयात् ।
एवं भैरव्यग्निर्जनितः स्याद्धोमसमाचरेताथ ॥ ३४ ॥

पालाशैर्मधुरत्रयेण कुसुमैः सिक्तै रशेषान्नरः
कामांश्चम्पकपाटलाविचिकिलैः प्राप्नोति होमश्रियम् ।
राज्यं विल्वदलैः फलैरपि तथा सामान्यमम्भोरुहै
वायुः शाद्वलपल्लवैः सह गुड़ैः शान्तिं सहान्नैस्तिलैः ॥ ३५ ॥

अघोरेण द्रविणं विगदत्वं प्राप्याच्च सिद्धार्थैः ।
प्रीतिं प्रियङ्गुपत्रैः पुत्रान् सौख्यं फलैर्मनुजाः ॥ ३६ ॥

लाजैः सौभाग्यं धान्यहोमेन
होमात् पुष्पैर्यच्चलोकाधिपत्यम् ।
मर्त्यैः पुन्नागैरर्तिविद्याधरत्वम्
पुष्पैर्मालत्याः सिद्धगन्धर्वलोकान् ॥ ३७ ॥

---

स्थिता सा उत्तरे मध्ये च ऋद्धिं सिद्धिञ्च तनुते। श्रीमन्नामेति अमुष्य भक्तध्वजस्य वह्नेः श्रीमन्नामासि मङ्गलनामासीति शारदातिलके राघवभट्टः। परिधीनिति प्रादेशद्वयपरिमितयज्ञीयकाष्ठं शेलुः वृक्षविशेषः। शेलुः श्लेष्मातकः शीत,

आकृष्टिर्यक्षिणीनां त्रिमधुरसहितैरर्जुनैः सर्षपैः स्याद्
वेश्या वश्या भवेयुर्हयरिपुकुसुमैः किंशुकैश्चापि होमात्।
वश्याः स्युः कर्णिकारैरथ धरणिसुराः क्षत्रियाः कासमर्दै-
र्वैश्यानां किङ्किरातैर्गण इह वशगः पाटलाभिश्च शूद्राः॥३८॥
छागलाङ्गजजाङ्गलहोमात् परराष्ट्रं स्ववशं भवेदशेषम्।
अथवारिबलं पराङ्मुखं स्यान्मधुराक्तेन महापललेन वापि॥३९॥
कटुत्रयपत्रनिम्बकेशैः सगुडैर्नीरपलान्वितैर्निशासु।
कटुतैलविमिश्रितैश्च होमादरयस्त्रिमुनिवासरान् म्रियन्ते॥४०॥
नग्नजिदस्त्यजरो हरिद्राकण्डनैर्विहितः किल होमः।
सप्तदिनात् प्रतिपक्षनृपाणां स्तम्भनकृत् प्रबलस्य बलस्य॥४१॥

मापैर्मूकत्वं कोद्रवैर्व्याधिबाधाम्
आतङ्कार्त्तिः स्यात् कलायैस्तु होमात्।
उन्मत्तः स्यादक्षजाभिः समिद्भि-
र्मृत्युः सप्ताहाच्छाल्मलीवृक्षजाभिः॥४२॥

कपिलाघृतसंयुतैर्मनुष्यो यवगोधूमतिलैः षडस्रकुण्डे।
नियुतं खचरत्वमेति हुत्वा निशि चारिण समाहितान्तरात्मा॥४३
पलाशस्य काष्ठैः परिज्वाल्य हव्यासनं चन्दनाम्बूक्षितैर्बन्धुजीवैः।
समस्तानि भूतानि वश्यानि होमाद्भवेयुः प्रियङ्गुप्रसूतेश्च तद्वत्
॥४४॥

---

उद्दालो बहुवारकः इत्यमरः। क्षुद्रमंशाता इति यस्य प्रसिद्धिः। ह्रस्वशाखः शिफः क्षुप इत्यमरः। शिग्रुः शैलज इति ख्याते। विचिकिलः पुष्पविशेषः बन्धुजीव इति केचित्। कासमर्दैः कालकासुन्दापुष्पैः। किङ्किरातः पुष्पविशेषः छागलाङ्गजं छागमांसं जङ्गलो द्रव्यविशेषः पूर्ववत्। अथर्वेति अरिबलं शत्रुबलं पराङ्मुखं स्यात् मधुराक्तेन महापलल महामांसम् अतएव वैद्योक्तशास्त्रे ब्राह्मणे च तथा तैले मांसे चैत्यादिषु महच्छब्दो न दीयते, तथा, कटुत्रयनिम्बपत्रकेशैर्नीरपलान्वितैः

नरो भक्ष्यभोज्यान्नपानानि हुत्वा परां सम्पदां प्राप्नुयादत्र लोके।
वटोडुम्बराद्यङ्कुरैः स्वादुवर्गान्वितैः कल्पतां मल्लिकाभिर्यशः स्यात्
॥ ४५ ॥

तुष्टिर्नीलाम्बुजैर्होमात् स्यादचिरेण स्वशक्तिसुपेतुम्।
घृताहुतिद्विगुणितषोड़शाङ्गुलोन्नतिर्वरा तत इह मध्यमार्द्धतः ४६
गजाङ्गुलोन्नतिरधमा तिलोद्भवं तथैव माक्षिकमपि पञ्चगव्ययुक्।
एकं चुल्लकं पयसो दध्नो रसमैक्षवञ्च तद्वत् ॥ ४७ ॥

एकैकापूपलिकापायसमन्नप्रमाणञ्च।
कदलीफलमेकैकं नागरङ्गं मातुलुङ्गञ्च ॥ ४८ ॥

पनसं दशखण्डं स्याद्गुणखण्डं स्यात् फलं वैल्वम्।
कर्कटिकागुणखण्डात् दलपुष्पफलान्यखण्डानि ॥ ४९ ॥
चतुरङ्गुष्ठसमानव्यञ्जनपिण्याकशर्कराश्च।
चुल्लकार्द्धा हि तिलाः प्रसृतिमिताः शक्तवो गदिताः ॥ ५० ॥

लाजाः स्युर्मुष्टिमिताः कर्षार्द्धाः सर्षपाः प्रोक्ताः।
कर्षप्रतिमा मुद्गा माषाश्च व्रीहयो मुष्टिमिताः ॥ ५१ ॥
षोड़शनरपतिमाषा गोधूमाश्च रक्तशालयस्तद्वत्।
सप्ताष्टौ वाथ वा यवाः पञ्चशो भणिताः ॥ ५२ ॥
अर्द्धपलं गुड़मानं मुष्ट्यर्द्धं तण्डुलाः प्रोक्ताः।
कुङ्कुमसृगमदचन्दनघनसाराश्चनकमात्राः स्युः ॥ ५३ ॥

---

नरमांसैर्होमात् अवयः विसप्तवासरात् एकविंशतिदिवसात् प्राक् म्रियन्ते। तथा नग्नजिदस्थि कार्पासवीजं केचिद्रुद्राक्षफलम् अजलोम हरिद्राखण्डनकैर्विहितो होमः सप्ताहात् प्रति प्रतिपक्षनृपाणां स्तम्भनकृत् प्रबलस्य मांसहोमात् सुकरम्। अच-जावहेडासमिद्भिः निशिचारिण इडायां वायौ गते ॥ १२—४४ ॥

द्रव्यपरिमाणमाह। घृताहुतिद्विगुणितषोड़शाङ्गुलोन्नतिः द्वात्रिंशदङ्गुलोन्नति-र्घृतधारा एवम्भूता आहुतिर्वरा श्रेष्ठा अर्द्धेन मध्यं तथा तिलोद्भवं तैलं माक्षिकं

वदरफलप्रमाणं पुरं द्विखण्डं कपित्थफलकम्।
श्लेष्मातकं पिशाचतरुं त्यक्त्वान्येभ्यः समाहरेत् समिधः ॥५४॥
गोपुच्छमौषिकांश्च त्यक्त्वान्यत्तृणं परिस्तरणम्।
एधांसि हिरण्यायां चरुमाघारांश्च कनकायाम् ॥ ५५ ॥
बहुरूपायां जुहुयात् सिद्धार्थवैणवांश्च रक्तायाम्।
कृष्णायामिह लाजान् शक्तून् वैशुप्रभायाञ्च ॥ ५६ ॥
अतिरक्तायां तु तिलान् सर्वद्रव्याणि कनकायां वह्नेः।
कर्णे होमे व्याधिबाधा नेत्रेऽन्धं नासिकायाञ्च व्याधिः ॥ ५७ ॥
द्रव्यच्छेदो मस्तके स्यान्मुखान्तर्होमं कुर्य्यात्तेन नित्यं विपश्चित्।
॥ ५८ ॥
भेरीवारणवारिदध्वनिनिभो वह्नेर्ध्वनिः शोभनो-
वर्णः स्वर्णनिभः शुभोदयकरः सिन्दूरवर्णः समम्।
उद्यद्भास्करसन्निभश्च घुसृणक्षौद्रेन्द्रगोपारुणो
गन्धश्चम्पकपाटलाविचिकिलैराज्येन तुल्योऽपि च ॥५९॥

---

मधु पञ्चगव्यं मूकत्वहरणे तथैव पूर्व्ववज्ज्ञेयम्। उडुम्बराग्रान् उडुम्बरसमिधः तथा एकमेकं जुहुयात्। व्यञ्जनं सूपादि पिण्याकमन्नं कृशरासिलतण्डुलाः चतुरङ्गुलसमानाः चतुःपूर्व्वपरीताः। कर्षार्द्धे इति अशीतिगुञ्जापरिमितशास्त्रोक्ततोलकद्वयं कर्षं इति अतएव शुवलक्षणे कर्षाद्युग्राह्वि तच्छिर इत्युक्तं कर्षद्वयं शुक्तिः। षोड़शमाषकपरिमिता राजमाषाः। रेणुयवाः चूर्णयवाः पुरं गुग्गुलुः श्लेष्मातकं पूर्व्वोक्तवृक्षविशेषः। पिशाचतरुः वहेड़ा। गोपुरमौषिकान् तृणशेषान् त्यक्त्वा अन्यतृणपरिस्तरणम् एधांसि सप्तजिह्वायां पृथग् द्रव्येण होतव्यं तदेवाह हिरण्यायां चरुं कनकायाम् आघारं तप्तघृतं दद्यात्। कर्णादिहोमे भूषणमाह वह्नेरिति ॥ ४५—५६ ॥

वह्नेर्ध्वनिफलमाह भेरीति। भेरी वाद्यविशेषः वारणी हस्ती। वर्णफलमाह वर्ण इति। अस्त्रेण अस्त्रमन्त्रेण चक्रपूजां दशदिग्बन्धनञ्च कुर्य्यात्। दोषशान्तौ

पुन्नागनागकेशरगुग्गुलुगन्धोपमश्च सिद्धिकरः ।
छत्राकारा तु शिखा शिखिनः शुभदाथ कल्पना च भवेत् ॥६०॥
धूमोऽग्नेः कुन्दनिभः शुभफलदः काशकुसुमसङ्काशः ।
खरवायसरवसदृशो वह्नेः शब्दो विनाशकरः ॥ ६१ ॥
कृष्णो हुतवहवर्णो यजमानं नाशयेदचिरात् ।
पिङ्गो वहुरोगकरो रौप्याभो राष्ट्रहानिमपि तनुयात् ॥ ६२ ॥
विष्ठासदृशो गन्धो वह्नेर्दुःखानि विदधाति ।
मूत्रसमो बलहानिं स्वेदजे शुभविनाशनं कुर्य्यात् ॥ ६३ ॥
विच्छिन्नाग्नेर्मृत्युं शिखा सुवृत्ता करोति बलहानिम् ।
शुकपिच्छाभो धूमो वह्नेर्वाहानिहाशु नाशयति ॥६४॥
कुर्य्यात् कपोतसदृशः कृपीटयोनिर्गवां नाशम् ।
आवर्त्तः शुभफलदः प्रदक्षिणो वीतिहोत्रस्य ॥ ६५ ॥
विद्युत्पाते दर्दुरे विस्फूलिङ्गे आनर्थ्यं स्याद्धोमकाले कृशानोः ।
वामावर्त्तो विग्रहो हासयुक्तो होतुर्भीतिः सम्भवेद्भूतसङ्घात् ॥६६॥
वस्वधिकं शतमाज्यै र्जुहुयात् शान्तिकामेषु दोषेषु ।
अस्त्रेण साधकेन्द्रस्तनुयादथ चक्रपूजाञ्च ॥ ६७ ॥
वशो भवत्यवश्यं भूमिपतिर्लक्षहोमेन ।
लक्षार्द्धेनामात्यः सामन्तो लक्षपादेन ॥ ६८ ॥
षड्भिः सहस्रै र्भूपतिपत्नी वश्यास्तदीयपुत्राश्च ।
एकसहस्रहोमात् सुभगा गणिकाश्च वश्याः स्युः ॥ ६९ ॥
नियुतैर्दशभिर्भवन्ति सर्वे वशा नाकसदः सुरेन्द्रमुख्याः ।
नियुतैस्त्रिभिरेव देवपत्न्यो मुनयश्चापि अथान्यदेवता ॥ ७० ॥
गन्धर्वसिद्धचारणगणाप्सरसो हृषीकलक्षेण ।
विंशतिलक्षैर्वशगा भवन्ति विद्येश्वराः सर्वे ॥ ७१ ॥

---

जपानन्तरं नित्यजपप्रकारमाह जन्मेति । जन्माधारस्थहोदरात् मूलाधारकोटरात्

नियुतैः शतार्द्धसंख्यैः सदाशिवाम्भोजनेत्रकमलभवाः ।
वश्या भवन्ति लक्षैः कोटिभिराप्नोति शाश्वतं धाम ॥ ७२ ॥
पूर्णाहुतिमथ हुत्वा पुररिपुदयितां विसृज्य दृढभक्तिः ।
तदनु समाहितबुद्धिः स्वाहानाथं विसर्जयेन्मन्त्री ॥ ७३ ॥
सपरिस्तरानन्नुहोमे नित्ये परिधीन्न दहेन्मतिमान् ।
नैमित्तिके तु होमे परिधीन् परिस्तरान् दहेन्मन्त्री ॥ ७४ ॥
सुधाकरे चाथ समर्च्य देवीं नृत्यैश्च गीतैः स्तुतिभिः प्रणम्य ।
उद्वास्य मूलेन गुरूपदिष्टकादम्बरीभिर्जुहुयान्मनस्वी ॥ ७५ ॥

जन्माधारगृहोदरादजमुखत्र्यस्रान्तमात्रान्तया
वृत्त्या जल्पति शक्तितत्त्वनियतः सूत्राक्षमालायुतः ।
मन्त्रश्च स्ववशोन्नतः प्रतिपदं तत्प्रत्यगाशामुखम्
लिङ्गञ्च स्थितमव्ययं विजयते नित्यो जपात् त्रैपुरः ॥७६॥

इति श्रीनागभट्टविरचिते त्रिपुरासारसमुच्चये होमविधानं
नाम दशमः पटलः ।

अजमुखत्र्यस्रान्तमात्रान्तया अजमुखं मूलाधारस्थब्रह्मरन्ध्रं तदन्तर्गतं त्र्यस्रं तदन्तर्गतमात्रया तेजोरूपसूक्ष्मशिखया आवृत्त्या पौनःपुन्ये स्ववशो मन्त्रः प्रतिपदं प्रत्येकं द्रव्यं लिङ्गस्थितं लिङ्गत्रयोपरि यत्तेजः तस्योपरिस्थितं प्रत्यगाशामुखं सर्वतोमुखं तेजोविशेषणं जल्पति तद्बोधं करोति कीदृक्मन्त्रः शक्तितत्त्वनिहितः कुशलः तया सूत्राक्षमालायुक्तः सूत्ररूपाकारा अकारादिक्षकारान्तवर्णमालायुक्तः । एवं चिन्तनं नित्यजपरूपी भवति ॥ ५७—७६ ॥

इति श्रीगोविन्दाचार्य्यविरचितायां त्रिपुरासारसमुच्चयटीकायां पदार्थादर्शे दशमः पटलः ।